**मित्राणन्दः**–( कर्णौ पिधाय ) सिद्धाधिनाथ ! मामेवमौचित्यातिक्रमेण मा दवीथाः । वसुधास्पृहणीयवैभवैः खेचरचक्रवर्तिभिर्भवादृशैः प्रबोधितस्य श्रवणोदरसदः सुधावर्पिणश्चाटुकर्मणः पुरन्दराहस्य तस्यास्यानर्हाः खलु जठरपिठरीभरणमात्रोन्मदिष्णु चेतसो निस्तेजसो वणिजः ।

( नेपथ्ये )

श्रेयांसि प्रभवन्तु ते, प्रतिदिशं तेजांसि वर्धिष्णुतां
तां पुष्णन्तु, भवन्तु वीतविपदस्ते पाथसां सम्पदः ।
आशाः सन्तु भवद्यशोभिरनिशं व्याकोशकुन्दत्विषो,
विश्वेषां शमिनां तपोभिरनघैः कल्पान्तजीवी भव ॥ ११ ॥

**पुरुषः**–( समाकर्ण्य सकम्पम् ) यथाऽमी घोरघोणप्रभृतयस्तपोधनाः प्रमोद-प्रबोधितबाष्पोष्ममूर्छालकण्ठकुहरसदसो मधुरगम्भीरघोषमाशिषमुद्घोषयन्ति तथा जाने देवतायतनमुपसर्पति पाशपाणिः, तद् विसर्जयत माम् । अपरथा पुनरप्ययं दुरात्मा मयि कामपि यातनामाधास्यति । अहं च साम्प्रतं विगतशोकपरिच्छदः प्रत्युपकारविद् रुपमपि प्रथयितुमनलम्भूष्णुः । ततो यदि तत्रभवता भवता हतकस्य दुर्मेधसो विलसितेन किमपि व्यसनमुपजायेत तदा मा पदातिरेणु स्मरेयुः । ( इत्यभिधाय प्रणम्य त्वरिततरं निष्क्रान्त । )

**मैत्रेयः**–कथमयं पाशपाणिप्रतिभयेनौषधेर्वलयं विस्मृत्य गतवान् ? ।

( नेपथ्ये साक्षेपम् )

कः कालेन कटाक्षितः ?, स्फुटरुषा दृष्टः फणीन्द्रेण कः ?,
स्फूर्जद्वह्निकणः करिष्यति शिरः कस्याशनिर्भस्मसात् ? ।
झम्पां कल्पविशृङ्खले जलनिधौ को दातुमुत्कण्ठितः ?,
क्रीडावेश्मनि नः क एष मनुजः स्वैरं परिभ्राम्यति ? ॥ १२ ॥

( उभौ सत्रासमाकाशमालोकयत । )

( ततः प्रविशति गगनादवतरणं नाटयन् पाशपाणि
कुन्दप्रभप्रभृतिकश्च परिवार । )

**पाशपाणिः**–अरे मर्त्यौ ! मरणोन्मुखौ कुतस्त्यौ युवाम् ? । किमर्थं च देवतायतनस्य जगतीं पुरन्दरेणापि नमस्करणीयां वसुधासम्पर्कपांशुराभ्यां [ पादाभ्यां ] कश्मलयतः ? ।

( उभौ प्रतिभयेन प्रकम्पेते । )

**मित्राणन्दः**–परमेश्वर ! आग्रामविज्ञातद्वीपस्वरूपौ भग्नयानपात्रौ वणिजौ देवतायतनरामणीयकमवलोकयितुं जगतीमधिरूढौ ।

**कुन्दप्रभः**–परमेश्वर ! अबुद्धिपूर्वकोऽयमनयोर्मर्त्ययोरपराधः ।

पाशपाणिः—(सहकारमवलोक्य कुन्दप्रभं प्रति) परदारविप्लवकारी दुरात्मा खेचरापसदः कथं क्वचिदपि गतवान् ? । अरे मर्त्यौ ! जानीतं तस्य दुरात्मनः प्रवृत्तिम् ? ।

उभौ—(सभयम्) किमपि न जानीवः ।

पाशपाणिः—(विमृश्य) यथेयं वज्रकीलसङ्कुला विलोक्यते भूमिस्तथा व्यक्तमनयोर्मर्त्ययोः शल्यसमुद्धारप्रयोगः । (पुन साटोपं वज्रकीलानादाय मित्राणन्दं केशैर्गृह्णाति ।)

(मैत्रेयः प्रतिभयेन मूर्च्छति ।)

मित्राणन्दः—(धैर्यमवलम्ब्याऽऽत्मगतम्)

परोपकारः क्रियते स्वस्य कल्याणहेतवे ।
ततोऽपि यदकल्याणं कल्याणात् तत् पदं परम् ॥ १३ ॥

तदतः परं भगवतो नाभेयस्य पादाः शरणम् ।

पाशपाणिः—अरे मर्त्यापसद ! निजस्य दुर्विलसितस्य फलमनुभव । (इत्यभिधाय सहकाराभ्यर्णमुपनयति ।)

(नेपथ्ये)

प्रसीद पयसांपते ! श्लथय कौमुदीभर्तरि
त्रिलोकभयकर्मणीं हृदय-नेत्र-वारिक्रियाम् ।
अमी ननु तपोधना जनविहारवन्ध्ये भव-
त्प्रभावमधितापदः प्रतिवसन्ति घोरे वने ॥ १४ ॥

पाशपाणिः—कथमयं कुलपतेरनुजो गजपादः ? ।

(प्रविश्य)

गजपादः—यादसांनाथ ! कोऽयं निजे जामातरि क्रोधोद्बोधविप्लुवः ? ।

पाशपाणिः—(सलज्जं मित्राणन्दं विमुच्य) मुने ! कथमयं कुलपतेर्जामाता ? ।

गजपादः—दत्ताऽस्मै कुलपतिना युष्मत्पुत्री कौमुदी । विवाहमङ्गलमप्यद्यप्रातीनं तदपि युष्माभिरनुष्ठेयम् ।

कुन्दप्रभः—जलधिपरमेश्वर ! अपरोऽपि मनुष्यो न पात्रं भवत्क्रोधप्रबोधस्य, किं पुनरयं कुलपतेर्जामाता ?, तदयं विशेषतो यादसांनाथस्य प्रसादातिरेकं कमप्यर्हति ।

पाशपाणिः—एतस्मै प्रयच्छ तर्हि तां कल्पलतां कण्ठिकां येनायं कौमुदीनेत्रयोर्महोत्सवमुपनयति ।

(कुन्दप्रभ कण्ठिकामुपनयति ।)

पाशपाणिः—गजपाद ! जामातरमादाय प्रयाहि पर्णशालायाम् । वयमपि करणीयान्तरमनुतिष्ठामः ।

(इति निष्क्रान्ताः सर्वे ।)

॥ द्वितीयोऽङ्कः समाप्तः ॥

# अथ तृतीयोऽङ्कः

( ततः प्रविशति मित्राणन्दो मैत्रेयश्च । )

मित्राणन्दः—( स्मृत्वा ) मैत्रेय !

सत्यां यौवनभाजि तापसपतेः पुत्र्यां पुलोमात्मजा
दर्पं विश्वपुरन्ध्रिरूपजयिनि व्यर्थं वहत्यात्मनि ।
दर्पो वाऽस्तु दृशा निमेषकलुषमत्यासनिष्पङ्कया
जातं तर्हि मृगेक्षणासु नियतं पाञ्चालिकाश्चारवः ॥ १ ॥

( पुनः सानन्दम् )

अमृतजलधेः पुण्यैस्तैस्तैर्निमज्जितमूर्मिभिः
मृदुभिरभितो देवस्येन्दोर्मरीचिभिरञ्चितम् ।
निजवपुरिदं मन्ये तस्याः कुरङ्गकचक्षुषो
विरतिविमुखैः स्निग्धैर्दिग्धं कटाक्षनिरीक्षितैः ॥ २ ॥

( विमृश्य ) यतः प्रभृति भगवतः पाशपाणेस्तां कल्पलतां कण्ठिकामधिगतवानसि ततः प्रभृत्येव कौमुदीसम्पर्कपर्वणि कथङ्कारमतितरामुत्कण्ठते चेतः ? । तदवगच्छ किमत्र निदानम् ? ।

मैत्रेयः—स्त्री-पुंसयोर्मन्मथोन्मादैककार्मणं कण्ठिकायाः प्रभावातिशय एवात्र निदानम् । तदेहि पर्यालोचयितुं तां कौमुदीमुपवनाभ्यन्तरे क्वचिदपि मृगयामहे ।

( नेपथ्ये )

खणदिट्ठजणणिमित्तं बंधुअणं परिचिअं हिअकरं च ।
मिल्लंतीणं महिलाण मुणइ जइ माणसं बंभो ॥ ३ ॥

मित्राणन्दः—( आकर्ण्य ) कथमयं लतागृहाभ्यन्तरे कौमुदीध्वनिः ? । ( विलोक्य ) मैत्रेय ! कौमुदी कुन्दलता चात्रैव तिष्ठतः । तत् तावत् तिरोहिता एव क्षणं शृणुमो वयमनयोः सङ्कथाम् ।

( ततः प्रविशति कौमुदी कुन्दलता च । )

कौमुदी—( सकैतवम् ) अहवा निसग्गचंगंगसन्निवेसाहिं विचित्तभूसणाहिं नगरविलासिणीहिं चिलुत्तहिअयस्स तस्स को नाम अम्हारिसीसु दरिद्दकन्नगासु अणुराओ ? । ता निप्फलो चेअ मे एस बंधुअणपरिच्चाए पारंभो ।

---

१ ) क्षणदृष्टजननिमित्तं बन्धुजनं परिचितं हितकरं च । मुञ्चन्तीनां महिलानां जानाति यदि मानसं ब्रह्मा ॥

२ ) अथवा निसर्गचङ्गाङ्गसन्निवेशाभिर्विचित्रभूषणाभिर्नगरविलासिनीभिर्विलुप्तहृदयस्य तस्य को नामास्मादृशीषु दरिद्रकन्यकासु अनुरागः ? । तन्निष्फल एव ममैष बन्धुजनपरित्यागे प्रारम्भः ।

कुन्दलता—[1]सहि ! कीस अत्ताणयं विसायपिसाएण संतावेसि ? ।

अंगाण सन्निवेसो हलिअसुआणं पि तत्तिओ चेअ ।
वेसेणं चिय लायण्णविम्हओ धणवइसुआणं ॥ ४ ॥

मैत्रेयः—पश्य कौतुकम्,

प्रकृतिचपलं चक्षुर्वाचः स्थिरा हरिणीदृशः,
सरलिमपदं नासान्यासो, भ्रुवौ कुटिलस्थिती ।
नवधवलिमा गण्डाभोगोऽधरः किसलारुणः,
किमपि गुपिला नाभिर्वक्षः प्रकाशपयोधरम् ॥ ५ ॥

कुन्दलता—[2]अवि य—

काणं पि अंगलट्ठी भूसिज्जइ भूसणेहिं तरुणीणं ।
भूसिज्जइ उण काणं पि भूसणं अंगलट्ठीए ॥ ६ ॥

मित्राणन्दः—( उपसृत्य ) प्रिये ! लावण्यपुण्यपुण्येष्वपि किमात्मनोऽङ्गेषु वृथा वैराग्यमुद्वहसि ? ।

गात्रं सन्नतगात्रि ! नेत्रसुखदं, निःश्वासपूरांहृति-
र्नासाऽऽह्लादकरी, रदच्छदसुधा जिह्वाऽतिसौहित्यकृत् ।
नादः किन्नरकण्ठि ! कर्णसुखदो, वक्षोजलक्ष्मीरियं
वक्षः प्रीणयते, मृगाक्षि ! वद ते किं नेन्द्रियाणां मुदे ? ॥ ७ ॥

कौमुदी—( कण्ठिकां विलोक्य सात्त्विकभावान् नाटयति । पुनः स्वगतम् ) [3]इत्तिअकालं तादस्स अणुरोहेण मए अप्पा विडंबिदो । इआणिं पुण एदं चेअ नयण-मणमहूसवं सत्थवाहं अणुसरिस्सं ।

कुन्दलता—[4]सत्थवाह ! तेण मणिणा किं पि तुम्हाणं उवकिदं ? ।

मैत्रेयः—कौमुदीहृदयकार्मणं किमपि वस्तु तदानीमेवोपनयता तेन रत्नेन महदुपकृतम् ।

मित्राणन्दः—कुन्दलतिके ! अस्मन्मनःसङ्ग्रहणसत्यङ्कारस्त्वया समुपनीतस्तदानीमसौ मणिविशेषः ।

---

१ ) सखि ! कस्मादात्मानं विषादपिशाचेन सन्तापयसि ? ।
अङ्गानां सन्निवेशः हालिकसुतानामपि तावानेव । वेषेणैव लावण्यविस्मयः धनपतिसुतानाम् ॥

२ ) अपि च—कासामपि अङ्गयष्टिः भूष्यते भूषणैः तरुणीनाम् । भूष्यते पुनः कासामपि भूषणं अङ्गयष्टिना ॥

३ ) इयत्कालं तातस्यानुरोधेन मयाऽऽत्मा विडम्बितः । इदानीं पुनरेतमेव नयन-मनोमहोत्सवं सार्थवाहमनुसरिष्यामि ।

४ ) सार्थवाह ! तेन मणिना किमपि युष्माकमुपकृतम् ? ।

मैत्रेयः–कुन्दलतिके! अयमपि तस्य त्वदुपनीतस्य मणेः सत्प्रसादो यदयं महौषधिवलयसुभगम्भविष्णुर्वामेतरो मे बाहुः।

मित्राणन्दः–(सोत्कण्ठं कौमुदीवदनमवलोक्य) मैत्रेय!

रात्रिन्दिवं विजयिनो हरिणेक्षणानां,
वक्त्रस्य मैन्यमनुरुध्य विलाञ्छनस्य।
नीलोत्पलानि यदि हासमुपाश्रयेयु-
र्जायेत किं वद तदा जडजप्रवादः? ॥ ८ ॥

कौमुदी–(अपवार्य) [1]सहि! अज्ज केणावि कारणेण सत्थवाहकुमारो अमयघडिओ व्व सोहग्गमइओ व्व मुत्तिमओ व्व भयवं पंचबाणो मे लोअणाणं पडिहासदि। ता किं एसो अपुरवो को वि?।

कुन्दलता–

[2]एसो सो चिअ दइएसु घडइ सोहग्गचंगिमगुणाइं।
चंदो चिअ जणइ वाणीसु कठिणवंधेसु सलिलाइं (?) ॥ ९ ॥

मित्राणन्दः–प्रिये!

वक्त्रं शीतरुचिर्वचांसि च सुधा, दृष्टिश्च कादम्बरी,
बिम्बोष्ठः पुनरेष कौस्तुभमणिर्मूर्त्तिश्च लक्ष्मीस्तव।
श्रद्धालुर्युगपद् विलोकितुमयं स्वापत्यजातं चिरा-
देकस्थं विरचय्य कुन्दरदने! त्वामर्णवः सूतवान् ॥ १० ॥

अपि च—

त्वं कौमुदी सुदति! गात्रमिदं च पुष्प-
चापाभितापपरिवापनिपीतसौस्थ्यम्।
अङ्केन ते सुखयतस्तदिदं विधातुः,
सर्गक्रमो भगवतो जगतां प्रतीपः ॥ ११ ॥

कौमुदी–(स्वगतम्) [3]जं भोदि तं भोदु। अहं एदेण सह गमिस्सं। (प्रकाशम्) वणनिवासपसाएण मुद्धा खु अहं न विचित्तभणिदीओ जाणामि। एदं उण किं पि संखेवेण मंतेमि—अवरसत्थवाहपडिवत्तिविवरीदाए पडिवत्तीए तुमं पिक्खिस्सं। अओ वरं जं ते पडिहाइ तं करिज्जासु।

---

१) सखि! अद्य केनापि कारणेन सार्थवाहकुमारः अमृतघटित इव सौभाग्यमय इव मूर्तिमय इव भगवान् पञ्चबाणः मम लोचनयोः प्रतिभासते। तत्किमेषोऽपूर्वः कोऽपि।

२) एष स खलु दयितेषु घटयति सौभाग्यचङ्गिमगुणान्।
चन्द्र एव जनयति वाणीषु कठिनबन्धेषु सलिलानि (?)॥

३) यद् भवति तद् भवतु। अहं एतेन सह गमिष्यामि। वननिवासप्रसादेन मुग्धा खलु अहं न विचित्रभणितीः जानामि। एतत्पुनः किमपि संक्षेपेण मन्त्रयामि—अपरसार्थवाहप्रतिपत्तिविपरीतया प्रतिपत्त्या त्वां प्रेक्षिष्ये। अतः परं यत् ते प्रतिभाति तत् क्रियताम्।

**मित्राणन्दः**—प्रिये कुड्मलाग्रदति! अपरसार्थवाहानां प्रतिपत्तिं बोधयित्वा किमप्यपरमादिश ।

**कौमुदी**—[1]एदं खु अम्हाणं कवडतावसपेडयं ।

**मैत्रेयः**—ततस्ततः ? ।

**कौमुदी**—[2]तदो जो को वि पभूददविणो सत्थवाहो भोदि तस्स अहं परिणेदुं दिज्जामि ।

**मित्राणन्दः**—( सौत्सुक्यम् ) ततस्ततः ? ।

**कौमुदी**—[3]तदो मए सह कीलिदुं पण्णसालब्भन्तरे उवविसंतु च्चिअ पल्लंकतिरोहिदकूविआए निवडदि ।

**कुन्दलता**—( विहस्य ) [4]एसा सा अवरसत्थवाहाणं पडिवत्ती ।

**कौमुदी**—[5]अहं उण पुव्वसंचिअं पि दविणं संगहिअ पण्णसालब्भंतरदुवारेण तुम्हेहिं सह समागमिस्सं ।

**मित्राणन्दः**—( सरभसम् ) ततः परं क्व गन्तव्यम् ? ।

**कौमुदी**—[6]सिंहलदीवे गंतव्वं ।

**मित्राणन्दः**—मित्रमप्यावयोस्तत्रैव सङ्घटिष्यते ।

**कुन्दलता**—( मित्राणन्दं प्रति )

**[7]तहं कह वि जणो वेसाहिं अत्थलोहेण अत्थि वेलविओ ।**
**जह पिम्मब्भिभलासु वि न तासु वीसासमोअरइ ॥ १२ ॥**

[8]तदो मा खु तुम्हे अवरसत्थवाहपडिवत्तिसवणतरलिदहिदया निसग्गणिग्गएसु वि कोमुईवयणेसु वीसंभं न करिस्सध ।

**मैत्रेयः**—कुन्दलतिके! किमेवं सार्थवाहस्य चातुरीवैमुख्यमुद्भावयसि ? ।

**स्नुही-गवा-ऽर्कदुग्धानां दृश्यं यदपि नान्तरम् ।**
**तथाप्यास्वादपार्थक्यं जिह्वाऽऽख्याति पटीयसी ॥ १३ ॥**

---

१ ) एतत् खलु अस्माकं कपटतापसपेटकम् ।

२ ) ततो यः कोऽपि प्रभूतद्रविणः सार्थवाहो भवति तस्मै अहं परिणेतुं दीये ।

३ ) ततो मया सह क्रीडितुं पर्णशालाभ्यन्तरे उपविशन्नेव पल्यङ्कतिरोहितकूपिकायां निपतति ।

४ ) एषा साऽपरसार्थवाहानां प्रतिपत्तिः ।

५ ) अहं पुनः पूर्वसंचितमपि द्रविणं संगृह्य पर्णशालाभ्यन्तरद्वारेण युष्माभिः सह समागमिष्यामि ।

६ ) सिंहलद्वीपे गन्तव्यम् ।

७ ) तथा कथमपि जनो वेश्याभिरर्थलोभेनास्ति विडम्बितः । यथा प्रेमविह्वलास्वपि न तासु विश्वासमवतरति

८ ) ततः मा खलु यूयं अपरसार्थवाहप्रतिपत्तिश्रवणतरलितहृदया निसर्गनिर्गतेष्वपि कौमुदीवचने विश्रम्भं न करिष्यथ ।

( उभौ तथाकुरुतः । )

कुन्दलतिका—( मित्राणन्दं प्रति )

दइएहिं चेअ परम्मुहेहिं मयणग्गिभिंभलमणाओ ।
कारिज्जंते कुलबालिआउ गहिलाइँ कज्जाइं ॥ १५ ॥

गन्धमूपिका—ततस्तथाकथञ्चिदसा अभिमुखो भूयाः यथेयं कौलीनं किमपि नाऽऽचरति ।

( मित्राणन्द. सलज्जमधोमुखो भवति । )

कुलपतिः—

जामातः! प्रतिपादिता शुभशतप्रागल्भ्यलभ्या स्वयं,
तुभ्यं स्वर्गनितम्बिनीप्रतिनिधिः पुत्री मया कौमुदी ।
पित्रोर्नेत्रमहोत्सवे करतलव्यामोचनापर्वणि,
स्वैरं वस्तु यदिष्टमस्ति भवतस्तत्किञ्चिदुच्चैर्वृणु ॥ १६ ॥

मित्राणन्दः—( अञ्जलिं बद्ध्वा ) विषापहारमन्त्रोपदेशेन प्रसीद ।

कुलपतिः—( सावहेलम् )

प्रियां प्राणेभ्योऽपि त्वयि विसृजतो वत्स! तनया-
मदेयं किं नाम स्वमपि विजहासोः कुलपतेः ? ।
किमेतैस्तैः पल्लीजनसमुचितैरक्षरलवै-
रसाध्यं विश्वानामपि किमपि वस्तु स्मर ततः ॥ १७ ॥

गजपादः—

अल्पत्वं च महत्त्वं च वस्तुनोऽर्थित्वमीक्षते ।
ऋव्ये तरक्षुः श्रद्धालुर्न कव्ये त्रिदशांपतिः ॥ १८ ॥

गन्धमूपिका—भगवन्! यदभिरुचितं जामात्रे तदस्तु ।

पुरोधाः—मुनीन्द्र! नार्हसि पवित्रेऽस्मिन् पाणिमोचनापर्वणि जामातुर्वैमनस्यमाधातुम् ।

कुलपतिः—( विमृश्य सविषादम् ) मर्कटवर्ण! पवित्रय पुष्पोपहारेण ध्यानवेदीम् ।

( मर्कटवर्णस्तथाकरोति । )

( कुलपति. रसनाबन्धमाधाय ध्यानं नाटयति । )

गजपादः—( कर्णं दत्त्वा )

मञ्जीराणि यथा रणन्ति, बहलः कोलाहलः खेचरी-
व्रातस्यैष यथा, यथा च वियति ज्योतिः समुज्जृम्भते ।

---

दयितैः एव पराङ्मुखैर्मदनाग्निविह्वलमनसः । कार्यन्ते कुलबालिका ग्रथिलानि कार्याणि ॥

दिव्यः कोऽपि निरर्गलः परिमलः काष्ठाः स्तृणीते यथा,
व्यक्तं हन्त! तथोपसर्पति महीं श्रीजाङ्गुलीदेवता ॥ १९ ॥

कुलपतिः—(सप्रश्रयम्) स्वस्ति देवतायै।

देवता—(सविनयम्)

श्रीमन्मुनीश्वर! शिवप्रतिभूः समाधि-
श्चापल्यविप्लवमपास्यत कच्चिदुच्चैः ?।
सर्वेऽपि किं व्रतभृतः सुखमासते ते ?,
किञ्चाद्य मां किमसि संस्मृतवानकस्मात् ? ॥ २० ॥

कुलपतिः—(सादरम्)

हालाहललहरीं विद्यां वन्द्यां देवैः सदानवैः।
एतस्मै देवि! जामात्रे प्रसीद प्रतिपादय ॥ २१ ॥

(देवता मित्राणन्दस्य शिरसि दक्षिणभुजं निधाय कर्णे एवमेव।)

मित्राणन्दः—महाप्रसादः (इत्यभिधाय प्रणमति।)

देवता—मुनीन्द्र! व्रजामो वयम्।

कुलपतिः—निष्प्रत्यूहास्त्रिदशसम्पदो भूयासुः।

(देवता तिरोधत्ते।)

(नेपथ्ये)

अस्ताद्रिमाश्रयन्तं प्रदोषसंहृतसमस्तवसुसारम्।
वोढारं कुलवनितेव मित्रमनुसरति दिनलक्ष्मीः ॥ २२ ॥

गजपादः—(साशङ्कमात्मगतम्) कथमयं वटुः सन्ध्यासमयव्यावर्णनाव्याजेन दुष्टदोषघोरघोणापहृतद्रविणसारेण सार्थवाहकुमारेण सह वत्साया गमनं सूचयति ?।

गन्धमूषिका—(पुरोधसं प्रति) रजनिरिदानीम्, पर्णशालाभ्यन्तरमुपैतु वत्सा, स्यतु अपरसार्थवाहप्रतिपत्त्या जामातरम्।

कुलपतिः—वयमपि तर्हि प्रादोषिकीं सन्ध्यामनुष्ठातुं प्रतिष्ठामहे।

(इति निष्क्रान्ताः सर्वे।)

॥ तृतीयोऽङ्कः समाप्तः ॥

## [ ॥ अथ चतुर्थोऽङ्कः ॥ ]

( ततः प्रविशति मित्राणन्दो मूर्धन्यस्तकरण्डा कौमुदी च । )

**मित्राणन्दः**—( समन्ततोऽवलोक्य )

प्राचीनमञ्चति वियत् पृथुशोककोक-
कान्ताकपोलपुलकौपयिकं दिनेशः ।
श्रान्ता इवास्तनटकुट्टिममाश्रयन्ति,
राजीवजीवितहृतो हरिणाङ्कपादाः ॥ १ ॥

**कौमुदी**—अज्जउत्त ! किंत्तिअं अज्ज वि गंतव्वं ? ।

**मित्राणन्दः**—प्रिये ! महत्यपि ग्रामपारे मार्गोदन्वति मास विषादनिपादं स्पृशः । प्राप्ता एव सिंहलद्वीपराजधानीपरिसरभुवम् । यदि च रजनीचरणचङ्क्रमणेनातिचिरं परिश्रान्ताऽसि तदानीमवतार्य शिरसः करण्डमनेकस्तबककदम्बकखर्वशाखस्य क्रमुकखण्डस्यास्य निरपायासु च्छायासु विनोदय क्षणं प्ररूढगाढखेदं मार्गखेदम् ।

( कौमुदी तथाकरोति । )

**मित्राणन्दः**—प्रिये ! नानादेशोद्भवैर्भग्नयानपात्रैर्वणिग्भिन्र्यासीकृतस्य विचित्रस्य कनकरत्नाभरणस्य समुद्वहनेन सुचिरमायासितानि बालमृणालकोमलानि तवाङ्गानि ! तदहं संवाहयामि ।

**कौमुदी**—( सलज्जम् ) अज्जउत्त ! अलाहि एदिणा विणयपब्भंसेण । न एस कुलवहूआणं पसंसणिज्जो मग्गो । तुमं पि पायविहारकिलेसेण परिसंतोऽसि, ता अहं ते अंगसंवाहणं करिस्सं ।

**मित्राणन्दः**—( साश्चर्यमात्मगतम् )

न मे गोत्रं वेद प्रकृतिमपि................न,
स्वभावस्थं किञ्चोपकृतमपि नास्यां किमपि मे ।
तथाप्येषा बन्धूनमुचदसिताक्षी मम कृते,
पुरन्ध्रीणां प्रेमग्रहिलमविचारं खलु मनः ॥ २ ॥

( प्रकाशम् )

प्रिये कौमुदि ! दवीयसो देशान्तरादुपगतवतः सर्वथाऽप्यविज्ञातकुल-शील-सम्पदः परोक्षप्रेमग्रन्थेर्मम वणिजो निमित्तं चिरप्ररूढसौहार्दमुद्रोपद्रुतानां बन्धूनामुपहास्यजनकं स्वदेशपरिहार-पादविहार-शीतवातातपप्रसहनप्रायं क्लेशावेशमतुच्छमुपगच्छन्ती निमीलित-

---

१ ) आर्यपुत्र ! कियदद्यापि गन्तव्यम् ? ।

२ ) आर्यपुत्र ! अलं एतेन विनयप्रभ्रंशेन । न एष कुलवधूनां प्रशमनीयो मार्गः । त्वमपि पादविहारक्लेशेन परिश्रान्तोऽसि, तदहं तेऽङ्गसंवाहनं करिष्यामि ।

नेत्रपत्रा शैलेन्द्रमधिरोहसि, अविद्यमानयानपात्रा महार्णवमवगाहसे, अनासादितजाङ्गुली-प्रसादा पन्नगाधिनाथमुत्कोपयसि ।

कौमुदी—अज्जउत्त ! कीस इत्तियं पि सयलमहेलाजणसमाणं मम चरिदं निरूविअ विम्हयमुवगदोऽसि ? ।

खणमित्तदिट्ठपिअयणपिम्मभरुब्भिभलाओ महिलाओ ।
चिरपरिचिए वि मिल्लंति बंधवे एस किर पगिदी ॥ ३ ॥

मित्राणन्दः—( स्वगतम् )

वीरेषु गणनां पूर्वं परमर्हन्ति योषितः ।
यास्तृणायाभिमन्यन्ते प्राणान् प्रेमान्धचेतसः ॥ ४ ॥

कौमुदी—किञ्च—

देसं वयंति विसमं सहंति णिच्चं भमंति दुहिआओ ।
तह वि महिलाण पिम्मं दइयम्मि न सयणवग्गम्मि ॥ ५ ॥

ता अवरं मे भत्तिं निरूवेदु अज्जउत्तो ।

मित्राणन्दः—( सविनयम् ) प्रिये कौमुदि !

पितृभ्यामावाल्यादजनि यदनन्तं किमपि ते,
प्रियं वा श्रेयो वा तदुपनयने कोऽसि कृपणः ? ।
इदं सत्यासत्यं पुनरभिदधे प्रीतिमुखरः,
परं कालादस्माद् भृतकनिरपेक्षस्तव जनः ॥ ६ ॥

( कौमुदी सलज्जमधोमुखी भवति । )

मित्राणन्दः—( विचिन्त्य सखेदम् )

सुखाकरोति संयोगस्तथा न तव कौमुदि ! ।
मैत्रेयस्य परित्यागो यथा दुःखाकरोति माम् ॥ ७ ॥

कौमुदी—अज्जउत्त ! अलाहि विसाएण । जधामंतिदं करिस्सदि मित्तेओ । संघडिस्सदि सिंहलदीवचिद्धाणं अम्हाणं ।

मित्राणन्दः—प्रिये ! यद्यपेतश्रमाऽसि तदा नगराभ्यन्तरे गमनाय प्रक्रमस्व ।

( कौमुदी करण्डकमादाय उत्थानं नाटयति । )

---

१) आर्यपुत्र ! कस्मादियदपि सकलमहिलाजनसमानं मम चरितं निरूप्य विस्मयमुपगतोऽसि ! । क्षणमात्रदृष्टप्रियजनप्रेमभरोद्विहला महिलाः । चिरपरिचितानपि मुञ्चन्ति बान्धवानेषा किल प्रकृतिः ॥

२) देशं व्रजन्ति विषमं सहन्ते कष्टं भ्राम्यन्ति दुःखिताः । तथापि महिलानां प्रेम दयिते न स्वजनवर्गे ॥ तदपरां मे भक्तिं निरूपयत्वार्यपुत्रः ।

३) आर्यपुत्र ! अलं विषादेन । यथामन्त्रितं करिष्यति मैत्रेयः । संघटिष्यते सिंहलद्वीपचिह्नानाम्

( उभौ नगराभिमुखमुपसर्पतः । )

मित्राणन्दः–( सानन्दम् ) प्रिये ! पश्य पश्य,

विश्राम्यत्पथिकाः क्वचित्, क्वचिदपि क्रीडाचलोपत्यका-
क्रीडत्पौरपुरन्ध्रयो, गिरिसरिज्झङ्कारतारा: क्वचित् ।
एते ते रमयन्ति कोकिलकुलव्याहारवाचालितो-
द्यानक्षोणिरुहः पुरीपरिसराः श्रोत्राणि नेत्राणि च ॥ ८ ॥

( पुरोऽवलोक्य )

धावं धावमयं पुरः पुरजनः किं कान्दिशीको भ्रम-
त्येषोऽपि श्रुतिदुर्भगः प्रतिदिशं ढक्कानिनादः कथम् ? ।
रुध्यन्तेऽध्वनि किं पदातिपटलैरागन्तवो जन्तवः ?,
कस्मात् कावचिका निकुञ्जकुहराण्याघूर्ण्यते वाजिभिः ? ॥ ९ ॥

भवतु तावत्, एतं सम्मुखीनमापतन्तं प्रवयसं द्विजन्मानमुपसृत्य पृच्छामि ।

( ततः प्रविशति द्विजः । )

( मित्राणन्दः प्रणमति । )

द्विजः–स्वस्ति यजमानाय ।

मित्राणन्दः–(सविनयम्) आर्य ! इदानीमेव देशान्तरतः समुपागतोऽहम्, अतो न विदुरः कस्याप्यत्रत्यवृत्तान्तस्य । तत् कथय केयं पुरी ?, कोऽस्यां स्वामी ?, किमर्थं च प्रतिरथ्यमाबद्धकनककञ्चुकैः कैश्चिदाकृष्टकरालकरवालैः कैश्चिदारोपितचापैः कैश्चित् परिघपाणिभिः पत्तिभिः प्रतिरुध्यते स्वेच्छाप्रचारी प्रतिभयचकितेक्षणः प्राणिगणः ? ।

द्विजः–महाभाग !

इयं सा सिंहलद्वीपभूतधात्रीललाटिका ।
श्रीनटीरङ्गशालेव रङ्गशालाभिधा पुरी ॥ १० ॥

मित्राणन्दः–ततस्ततः ? ।

द्विजः–

द्विषां यशःशीतमयूखराहुर्महीपतिर्विक्रमबाहुरेताम् ।
प्रतापपीतद्युतिपीतविश्ववसुन्धरादौस्थ्यकथः प्रशास्ति ॥ ११ ॥

कौमुदी–तदो तदो ? ।

द्विजः–अद्य पुनश्चिरप्ररूढचौर्योपद्रुतपौरजनोद्वेजितेन राज्ञा निष्ठुरं निर्भर्त्सितः कालपाशनामा पुरीरक्षकस्तस्करप्रचारं कुतोऽपि विज्ञाय सर्वतो गवेषयितुमारब्धवान् । ( इत्यभिधाय द्विजो निष्क्रान्तः । )

१ ) ततस्ततः ? ।

**मित्राणन्दः**—( वामाक्षिस्फुरणमभिनीय सभयम् ) साम्प्रतमपायपिशुनं नः किमप्यशकुनम् । तत् तावद् बहिरेव क्वचिदप्यासमहे यावदयं तस्करोपप्लवः क्वचिदपि विश्राम्यति । तदेहि कृतपुरीपरिसरनिवेशं जीर्णपाषाणसञ्चयं कात्यायनीनिलयमनुसरामः ।

( उभौ परिक्रामतः । )

**मित्राणन्दः**—प्रिये ! तदिदं पश्य,

केतुस्तम्भविलम्बिमुण्डमभितः सान्द्रान्त्रमालाञ्चित-
द्वारं शोणितपङ्किलाङ्गणमदन्मार्जारिभीष्मान्तरम् ।
गोपुच्छोत्थितदीपमश्मकुहरक्रोडमलुप्तोल्वण-
व्यालं दर्दुरदाहधूमविधुरं कात्यायनीमन्दिरम् ॥ १२ ॥

( कौमुदी विलोक्य वेपते । )

**मित्राणन्दः**—प्रिये ! अन्धकारप्राग्भारदुर्लक्ष्यविषमा चण्डिकायतनप्रदेशपदवी, ततो मत्पृष्ठलग्ना प्रविश ।

( उभौ मध्यप्रवेशं नाटयतः । )

**मित्राणन्दः**—( कतिचित् पदानि गत्वा विलोक्य च ) कथमयमभ्यन्तरे करकलितासिधेनुः प्रतिभयतरलेक्षणः कोऽपि पुरुषः ? ।

( कौमुदी पलायितुमिच्छति । )

**मित्राणन्दः**—( उच्चैःस्वरम् ) भो महापुरुष ! मा भैषीः । इदानीमेव देशान्तरतः समायातो वणिगहम्, न पुनस्तस्करो वा घातको वा, तदास्स्व यथासुखम् । ( पुनर्विलोक्य ) कथमयं पाषाणसन्धिविवरेण निःसृत्य बहिर्गतवान् ? । भवतु, तर्हि गर्भगृहावस्थितां भट्टारिकां विलोकयामः । ( विलोक्य ) प्रिये ! पश्य पश्य,

नेत्र-श्रोत्र-वरौष्ठ-बाहु-चरण-घ्राणादिभिः प्राणिनां,
मन्त्रैः क्लृप्तबलिर्वसारसकृतस्नात्राऽन्त्रमालार्चिता ।
कण्ठस्थोरगलिह्यमानमहल्लीहाङ्गरागा गल-
द्रक्ताऽऽर्द्राग्र्यनरेन्द्रकृत्तिरसनोत्तंसा मृडानी पुरः ॥ १३ ॥

( कौमुदी उत्तरीयाञ्चलेन नासां पिधाय सजुगुप्सं निध्यायति । )

**मित्राणन्दः**—प्रिये ! क्वचिदपि प्रदेशे विमुञ्च द्रविणकरण्डकम् ।

**कौमुदी**—( करण्डकं विमुच्य ) अज्जउत्त ! इआणिं केणावि कारणेण मह सरीरम्मि महंतो उव्वेगो ।

---

१ ) आर्यपुत्र ! इदानीं केनापि कारणेन मम शरीरे महानुद्वेगः ।

मित्राणन्दः–प्रिये ! मार्गपरिलङ्घनेनापि तावदतितरां परिश्रान्ताऽसि, साम्प्रतं पुनः कात्यायनीप्रतिभयमप्यभूत्, ततस्ते वपुषि समुद्वेगः, तन्मास्म किमपि विरूपमाशङ्किष्ठाः ।

( नेपथ्ये )

ऐसा चोलपदपद्धई कच्चायणीभवणं पविट्ठा । अओ वलं लायपुत्ते पमाणं ।

मित्राणन्दः–( आकर्ण्य समयम् ) यथाऽयमानुपदिकस्य व्याहारः तथा जाने योऽयं करकलितासिधेनुर्निःसृत्य गतः व्यक्तमसौ चौरः । तदिदानीं तस्करस्थानोपलब्धैरस्माभिः किमनुष्ठेयम् ? ।

( कौमुदी कम्पते । )

( नेपथ्ये )

इहैव पदपद्धतिर्विशति पार्वतीमन्दिरे,
तदत्र बहिरास्यतां निभृतवृत्तिभिः पत्तिभिः ।
अयं स धृतजीवितः परगृहा-ऽऽवलुण्टाचणो,
नियम्य परिगृह्यतां द्रविणघस्मरस्तस्करः ॥ १४ ॥

( कौमुदी मूर्च्छामभिनयति । )

( नेपथ्ये )

भो भोः पदातयः ! कृतावधानैर्मध्ये प्रवेष्टव्यम्, अपि नाम दस्युः प्रहारमादधीत ।

मित्राणन्दः–( विलोक्य ) सपरिकरः प्राप्तः पुरीरक्षकः ।

( ततः प्रविशति कालपाशः दीर्घदंष्ट्र-वराहतुण्डप्रभृतिकश्च परिवारः । )

कालपाशः–दीर्घदंष्ट्र ! [ मध्य ]मवलोकय ।

दीर्घदंष्ट्रः–( विलोक्य ) राजपुत्र ! अस्ति किमपि मानुषमभ्यन्तरे ।

कालपाशः–( सक्रोधमुच्चै स्वरम् )

मुषित्वा पौराणां नवकनक माणिक्यघटितां-
श्चिरं काञ्ची-चूडामणि-मुकुट-ताडङ्क-कटकान् ।
क रे यासि क्षुद्र ! ?, द्रुततरमगाराद् भव बहिः,
स्वयं क्रुद्धस्तुभ्यं पितृपतिरिदानीं न भवसि ॥ १५ ॥

मित्राणन्दः–प्रिये ! उत्तिष्ठोत्तिष्ठ, प्राप्ता राजपदातयः ।

( उभौ बहिर्भवत. । )

( कौमुदी परिधानपटेन करण्डकं पिदधाति । )

---

१ ) एषा चौरपदपद्धतिः कात्यायनीभवनं प्रविष्टा । अतः परं राजपुत्रः प्रमाणम् ।

**कालपाशः**–( साक्षेपम् ) अरे ! कस्त्वमसि ? ।

**मित्राणन्दः**–( सकम्पम् ) राजपुत्र ! पथिकोऽहम् ।

**कालपाशः**–इयं वनिता का ? ।

**मित्राणन्दः**–मम सधर्मिणीयम् ।

**कालपाशः**–बाले ! करण्डिकायां किमस्ति ? ।

**कौमुदी**–( सकम्पम् ) संबलयं किं पि अत्थि ।

**वराहतुण्डः**–( करण्डिकामुत्पाट्य विमुच्य च कालपाशं प्रति ) प्रभूतद्रविणसारभारेण न शक्यते समुत्पाटयितुम् ।

**कालपाशः**–( सोपहासम् ) बाले ! शम्बलस्य किमियान् भारः ? मध्यस्थिता चौर्यं कारयसि । ? ।

**कौमुदी**–तोद ! अहं चोरिअं सिविणे वि न पिच्छामि ।

**कालपाशः**–प्रत्यक्षमपि पश्यन्ती क्षमे न किं करिष्यसि ? । ( पुनः सावहित्थम् ) दीर्घदंष्ट्र ! विधेहि किमप्यस्य समयोचितमातिथ्यम् ।

( दीर्घदंष्ट्रो यष्टिना प्रणिहन्तुमारभते । )

( कौमुदी सपूत्कारमन्तरा निपतति । )

**कालपाशः**–वनितायां प्रहारः प्रयत्नतो रक्षणीयः ।

**मित्राणन्दः**–राजपुत्र ! भिन्नयानपात्रो वणिगहमुद्धरितशेषं किमपि द्रविणमादाय स्वनगरं प्रति प्रचलितः । ततो वृथातस्करापवादेन किं मां विगोपयसि ? । चौर्यचिह्नं किमप्युपदिश्य साक्षिणं वा कमप्युपस्थाप्य गृहाण वा मुषाण वा बधान वा ।

**कालपाशः**–आभरणकरण्डकादप्यपरं किं नाम चौर्यचिह्नम् ? ।

**मित्राणन्दः**–राजपुत्र ! ममैव द्रविणमत्र करण्डके ।

**कालपाशः**–सर्वमपि राज्ञः पुरतो वक्तव्यम् ।

**मित्राणन्दः**–( सदु:खमात्मगतम् )

यत् पोतस्य सुवर्ण-मौक्तिकनिधेर्भङ्गो वियोगो निजै-
र्यन्मातापितृभिर्विदेशवसतिर्येयं न तद् बाधते ।
मिथ्या यः पुनरिन्दुशुभ्रयशसो गोत्रस्य लक्ष्मैकम्-
रैफागारिकविप्लवः प्रतिमुहुर्दुःखाकरोत्येष माम् ॥ १३ ॥

---

१ ) शम्बलक किमप्यस्ति ।

२ ) तात ! अहं चौर्यं स्वप्नेऽपि न पश्यामि ।

कौमुदी—( सदैन्य पादौ संस्पृश्य ) तीद! मिल्हेहि मे निरवराहं भत्तारं। देहि पइभिक्खं।

कालपाशः—( साक्षेपम् ) आः पापे! तस्करपति! दूरस्थिता ब्रूहि। माऽस्मानुपस्पृश।

( कौमुदी सबाष्पमधोमुखी भवति। )

कालपाशः—( विमृश्य ) कोऽत्र भोः!!।

( प्रविश्य )

वज्राङ्कुरः—ऐसो म्हि, आणवेदु लायउत्तो।

कालपाशः—अरे वज्राङ्कुर! वादय वध्यपटहम्, उपनय सरासभं श्वपाकम्।

जं आणवेदि शामी। ( इत्यभिधाय वज्राङ्कुरो निष्क्रान्त। )

( नेपथ्ये दु श्रवो वध्यपटहध्वनि। )

कालपाशः—वराहतुण्ड! प्रलम्बय तस्करस्य केशान्। सन्दानय भुजौ।

( वराहतुण्डस्तथाकरोति। )

( कौमुदी तारस्वर प्रलपति। )

मित्राणन्दः—प्रिये!

मा विपीद कृतं बाष्पैः फलं मर्पय कर्मणाम्।
सत्यं विपाद-शोकाभ्यां न दैवं परिवर्तते॥ १७॥

( प्रविश्य सरासभ )

श्वपाकः—एँशे म्हि, आणवेदु शामी।

कालपाशः—अरे खङ्गिल! प्रसाधय रक्तचन्दनेन तस्करस्य शरीरम्। निक्षिप शरावमालां कण्ठे।

मित्राणन्दः—राजपुत्र! किमस्य श्वपाकस्य संस्पर्शनेन मामपवित्रयसि?।

कालपाशः—हला दुष्टे! तर्हि त्वमेव समाचर श्वपाककरणीयं निजे भर्तरि।

( कौमुदी रक्तचन्दनेनोपलिप्य शरावमाला कण्ठे निक्षिपति। )

कालपाशः—दीर्घदंष्ट्र! रासभमधिरोपय तस्करम्, इमां च योषितं मूर्धकृतकरण्डिकां रासभस्याग्रे कुरु।

( दीर्घदंष्ट्र सर्वमाचरति। )

---

१ ) तात! मुञ्च मे निरपराध भर्तारम्। देहि पतिभिक्षाम्।
२ ) एषोऽस्मि, आज्ञापयतु राजपुत्र।
३ ) यदाज्ञापयति स्वामी।
४ ) एषोऽस्मि, आज्ञापयतु स्वामी।

मित्राणन्दः–( स्वगतम् )

अस्मिन् कर्मणि भिन्नशर्मणि न मे चित्तस्य वाचां भ्रुवो-
र्दृष्टेः पाणिपुटस्य [ चाप्यणु ] रपि व्यापारभारोदयः।
भूयांस्येवमपि [ श्रुति ] ज्वरकराण्यायान्त्यभद्राणि चे-
न्नाभेयस्य तदा पदानि शरणं देवस्य दुःखच्छिदः॥ १८॥

( नेपथ्ये )

विधिना विधीयमानं कमलानां बन्धनं त्वदोपाणाम्।
द्रष्टुमनलम्भविष्णुर्भानुर्द्वीपान्तरं श्रयति॥ १९॥

कालपाशः–वराहतुण्ड! प्रातरयं राजकुलाय दर्शनीयः। साम्प्रतं पुनर्भ्रमयत्नेन सर्वासु नगररथ्यासु। वयमपि तस्करान्वेषणखेदं विनोदयितुं व्रजामः।

( इति निष्क्रान्ताः सर्वे। )

॥ चतुर्थोऽङ्कः समाप्तः॥



## [ ॥ अथ पञ्चमोऽङ्कः ॥ ]

( ततः प्रविशति अमात्यः कामरतिः । )

**कामरतिः**—कोऽत्र भोः ! असत्परिजनेषु ? ।

( प्रविश्य )

**विनयन्धरः**—एषोऽस्मि ।

**कामरतिः**—

लक्ष्मीपयोधरोत्सङ्गसुभगङ्करणांसभूः ।
कुमारो रङ्गशालाया मध्यमद्य प्रवेक्ष्यति ॥ १ ॥

ततः समादिश सङ्गीतकाय गन्धर्वलोकान् । अलङ्कारय विचित्रमणि-मौक्तिकप्रालम्बैश्चीनांशुकावचूलैश्च पुरगोपुरतोरणानि । विधापय मन्दिरद्वारालिन्दकेषु मसृणघुसृणगोमुखानि । निर्मापय प्रतिवेश्म बहलपरिमलाकृष्टमधुकरीमधुरझङ्कारमुखराणि मृगमदद्रवच्छटाच्छोटनानि ।

सर्वमचिरादाचरामि । ( इत्यभिधाय विनयन्धरो निष्क्रान्तः । )

**कामरतिः**—( पुनर्विमृश्य ) कोऽत्र भोः ! ! ? ।

( प्रविश्य )

**शिखण्डः**—आदिशतु मन्त्री ।

**कामरतिः**—अद्य किल नगरोद्यानमधिवसतः कुमारस्य

लक्ष्मीपतेरभिमुखं मुषितान्यभूप-
लक्ष्मीस्वयङ्ग्रहमहग्रहिलैकबाहुः ।
मार्गे कियन्तमपि सैन्यवृतो यियासुः,
श्रीसिंहलावनिवधूपरमेश्वरोऽयम् ॥ २ ॥

ततो गत्वा ब्रूहि गजसैन्याधिपतिं पुण्डरीकम्—यथा करटिघटां प्रगुणय, विशेषतश्च जयमङ्गलाभिधानं गजराजम्, हरिषेणं च वाजिसैन्याधिपतिं वाजिसेनासन्नहनाय समादिश ।

( शिखण्डः प्रणम्य निष्क्रान्तः । )

( नेपथ्ये )

इत इतः सिंहलेश्वरः ।

---

1 हर्षेण च वाजिनं सैन्या° क० ।

**कामरतिः**—कथमयमास्थानमुपसर्पति देवः ?।

( प्रविश्य राजा सिंहासनमलङ्करोति । )

( अमात्यः प्रणमति । )

**राजा**—अमात्य ! प्रवर्तितः प्रविशतो वत्सस्य नगर[ प्रवेश ]महोत्सवः ?।

**कामरतिः**—अथ किम् ?।

( प्रविश्य )

**प्रतीहारः**—देव ! रत्नाकरनगराधिवासिना विजयवर्मणा मण्डलेश्वरेण प्रेषितः पुरुषो द्वारि वर्तते ।

**राजा**—( साशङ्कम् ) शीघ्रं प्रवेशय ।

( प्रविश्य पुरुषः प्रणमति । )

**राजा**—( साक्षेपम् ) अरे करभक ! प्रस्थितो विजयवर्मा समूलकाषं कषितुं दुरात्मानं चक्रसेनम् ?।

**पुरुषः**—देव ! प्रस्थानमेव विज्ञपयितुं सिंहलद्वीपपरमेश्वरपादानां विजयवर्मणा मण्डलेश्वरेण प्रेषितोऽस्मि ।

**राजा**—'दुरुच्छेदः खलु दुरात्मा चक्रसेनः, ततस्त्वया समग्रसामग्रीकेण योद्धव्यम्' इति गत्वा समादिश विजयवर्माणम् ।

( पुरुषः प्रणम्य निष्क्रान्तः । )

**राजा**—( विमृश्य ) अमात्य !

आकर्ण्याऽऽगमनं वयं स्वनगराद् वत्सस्य लक्ष्मीपतेः,
सर्वाङ्गीणसुधानिषेकसुभगामास्वादयामो दशाम् ।
कामं वाममिदं स्फुरत्यविरतं नेत्रं च गात्रं च नः,
कोऽयं नाम परस्परप्रतिहतः सर्गक्रमो वेधसः ?॥ ३ ॥

**कामरतिः**—प्रभञ्जनप्रकोपप्रभवानामङ्गस्फुरणानां शुभा-ऽशुभोदर्केषु को नाम विश्रम्भः ?।

( नेपथ्ये वध्यपटहध्वनि. । )

**राजा**—अमात्य ! महोत्सवदिने किमिदम् ?।

( प्रविश्य )

**प्रतीहारः**—वर्धसे देव ! वर्धसे, मासः कालपाशेन नगरलुण्टाकस्तस्करः ।

1) °मनं निजस्य नग° ख ।

राजा—क्वासौ क्वासौ ? ।

( ततः प्रविशति कालपाशेन केशैर्गृहीतो मित्राणन्दः मूर्धकृतकरण्डिका कौमुदी च । )

राजा—( साश्चर्यम् ) अमुना नेत्रसुधाञ्जनैकसुहृदाऽप्याकारेण चौर्यकरणम्? अहो ! विचित्रः कर्मणां विपाकः ।

कामरतिः—( कौमुदीमवलोक्य साभिलाषमात्मगतम् )

कामं कामं कुसुमधनुषोऽप्यावहन्ती सशोके,
लोकेऽप्यस्मिन् यदि मृगदृशामीदृशी रूपलक्ष्मीः ।
क्लेशाकीर्णे तपसि विपुलस्वर्गभोगोत्सुकानां,
मन्दीभूता खलु तदधुना प्राणभाजां प्रवृत्तिः ॥ ४ ॥

राजा—( साक्षेपम् )

रे रे तस्कर ! कस्तवात्र जनकः ? कः सोदरः ? कः सुतः ?,
कस्त्राता ? किमु मित्रमस्ति ? सदनं ते कुत्र ? के बान्धवाः ? ।
कस्येयं कुसुमेषुकेलिसरसी सर्वाङ्गरम्या प्रिया ?,
केनाथ व्यसनेन विह्वलमना मुष्णासि नः पत्तनम् ? ॥ ५ ॥

मित्राणन्दः—( सभयम् ) देव ! समुद्रोपजीवी मित्राणन्दनामा वणिगहं उद्धरितशेषं कियदपि द्रविणमादाय स्वनगरं प्रति प्रचलितः । अत्र च मे देव एव त्राता पिता बान्धवो वा । इयं च मे सधर्मचारिणी । नगरमहं मुष्णामि न वा ? इत्यत्र देवैः प्रमाणम् ।

राजा—अरे कालपाश ! करण्डकाभ्यन्तरमवलोकय ।

कालपाशः—( विलोक्य ) देव ! एतानि सप्त कुण्डलानि, त्रयोदश मञ्जीराणि, एते चैकविंशतिरङ्गदाः, सप्तदश चूडामणयः, अपरस्य पुनर्वज्रप्रायस्य रत्नसमूहस्य न शक्यते सङ्ख्यानमाधातुम् ।

राजा—भद्रे ! त्वदीयमेतदाभरणम् ? ।

कौमुदी—( सलज्जम् ) अध इं ? ।

राजा—अमात्य !

दम्पत्योरियमाकृतिरयं च वाचां दृशां च विनिवेशः ।
पिशुनयति साधुभावं चौर्यं तु करण्डको वदति ॥ ६ ॥

कामरतिः—देव ! मा शङ्किष्ठाः । तस्कर एवायम् । कथमपरथा विषमसङ्कोऽयं नेपथ्यप्रकारः ? ।

---

१ ) अथ किम् ? ।

1 अथ क । 2 दैवं ख । 3 एतस्य ख । 4 दिशति ख ।

राजा–( कौमुदीं विलोक्य )

अस्याः सरोरुहदृशः सततोदयं च,
निर्लाञ्छनं च विरचय्य मुखं विधातुः ।
खण्डोदयं च जनविश्रुतलाञ्छनं च,
चन्द्रं पुनर्घटयतो विदितो विचारः ॥ ७ ॥

कामरतिः–( साभिलाषम् ) देव !

अज्ञातलक्ष्मणि सदोदयवृत्तभाजि,
पूर्वं सरोरुहदृशां घटिते मुखेन्दौ ।
सारूप्यदूषणभयाद् विधिनाऽयमिन्दुः,
पक्षक्षयी च घटितः स्फुटलाञ्छनश्च ॥ ८ ॥

( पुनः स्वगतम् ) विफल एव ममावतारो यदनया सह न क्रीडामि ।

राजा–अरे कालपाश ! कुत्र प्रदेशे कथं चायं प्राप्तः ? ।

कालपाशः–आनुपदिकेनार्पितश्चण्डिकायतने प्रतिगृहीतः ।

राजा–( विमृश्य ) तं त्वरिततरमानुपदिकमाकारय ।

( प्रविश्य )

आनुपदिकः–एसे म्हि[1] ।

राजा–अरे ! अयं तस्करः त्वया पदानुसारेण समुपनीतः ? ।

आनुपदिकः–( मित्राणन्दपदान्यवलोक्य ) भट्टा ! अन्नालिया शा पदपद्धई जा कचायणीभवणं पविट्ठा ।

राजा–अमात्य ! किमिदम् ? ।

कामरतिः–देव ! अयमपि चौरः, यस्य च पदपद्धतिः कात्यायनीभवनं प्रविष्टा सोऽपि चौरः । महदिदं देवस्य नगरम्, सम्भवन्ति भूयांसो दस्यवः ।

राजा–( कौमुदीं प्रति )

वक्त्रं पात्रं लवणमधुनः, पद्महृद्यौ च पाणी,
वाणी स्वादुश्चकितहरिणीहारिणी नेत्रपत्रे ।
लज्जासज्जा स्थितिरविकृतिर्भूरिसत्त्वं महत्त्वं,
तत् त्वं तत्त्वं कथय ननु नः काऽसि ? कस्यासि पत्नी ? ॥ ९ ॥

कौमुदी–( सलज्जम् ) देव ! वणिअस्स दुहिआ, एदस्स वहुआ ।

१ ) एषोऽस्मि । २ भर्तः ! अन्यादृशी सा पदपद्धति या कात्यायनीभवनं प्रविष्टा । ३ ) देव ! वणिजो दुहिता, एतस्य वधूः ।

1 एसो म्हि स्व ।

**कामरतिः**—देव ! नेयमस्य पत्नी, किमुतानेन कुतोऽप्यपहृत्य मन्त्रेण वा तन्त्रेण वा व्यामोहिता, तदियं मुहुर्मुहुरेतदनुकूलं व्याहरति ।

**राजा**—( विमृश्य ) अरे कालपाश ! पौरानाह्वय ।

( प्रविश्य कृतोष्णीषाः सप्राष्टा वणिजः प्रणमन्ति । )

**राजा**—उपलक्ष्योपलक्ष्य प्रतिगृह्णीत यूयं स्वं स्वमाभरणं द्रविणं च ।

**वणिजः**—(विलोक्य) भट्टा ! न इत्थ अम्हाणं आभरणं वा दविणं वा किं पि अत्थि।[1]

**राजा**—अमात्य ! न तावदमुनाऽस्मत्पौराणां किमप्यपहृतम्, देशान्तरतस्करनिग्रहे तु के वयम् ? ।

**कामरतिः**—( स्वगतम् ) न नामास्मिंस्तस्करे जीवति ममेयं कथञ्चिदपि वनिता सम्पद्यते, तदयं यथाकथञ्चिदपि व्यापादयितव्यः । भवतु । ( प्रकाशम् ) देव ! निश्चयेन तावदयं चौरः । साम्प्रतमेव चायमायातस्ततः पौराणां किमपि नापकृतवान् । अतः परं पुनः सर्वमपि शनैः शनैरपकुर्यात् । चौरश्च राज्ञां स्वदेशजो वा परदेशजो वा वध्य एव । ( पुनरपवार्य ) इदं धनं इयं स्त्री च देवपादानामभ्यर्णे विश्राम्यतु । चौरस्य पुनः प्रतिविधानं कालपाशः कुरुताम् ।

**राजा**—( कालपाशं प्रति ) यदभिधत्ते मन्त्री तदनुष्ठेयम् ।

( कामरतिः कालपाशस्य कर्णे एवमेव । )

( कालपाशः साक्षेपं मित्राणन्दं केशैर्गृह्णाति । )

( नेपथ्ये करुणध्वनिः । )

**राजा**—( सभयमाकर्ण्य ) अमात्य ! किमिदम् ? ।

( प्रविश्य )

**चेटी**—( सोरस्ताडम् ) भट्टा ! मुसिद म्हि मुसिद म्हि ।[2]

**राजा**—चतुरिके ! विश्रब्धमभिधीयताम् ।

**चेटी**—भट्टा ! देवी पत्तलेहा विण्णवेदि ।[3]

**राजा**—त्वरिततरं विज्ञपय—किमादिशति देवी ? ।

**चेटी**—कुमारो लच्छीवई उज्जाणे कुसुमावचायं कुव्वाणो भुअंगमेण दट्ठो विवन्नो अ, एदं देवी विन्नवेदि ।[4]

---

१ ) भर्तः ! नात्रास्माकं आभरणं वा द्रविणं वा किमप्यस्ति ।

२ ) भर्तः ! मुषिताऽस्मि मुषिताऽस्मि ।

३ ) भर्तः ! देवी पत्रलेखा विज्ञपयति ।

४ ) कुमारो लक्ष्मीपतिरुद्याने कुसुमावचायं कुर्वाणः भुजङ्गमेन दष्टो विपन्नश्च, एतद् देवी विज्ञपयति ।

1 निग्रहेषु ख । 2 न चास्मि° ख ।

राजा—हा वत्स शशाङ्ककुलप्रदीप ! कामिमां दुस्थामवस्थामाप्तोऽसि ? ।

( ततः प्रविशति शिबिकाधिरूढः प्रनष्टसर्वक्रियः कुमारो लक्ष्मीपतिः प्रलपन्ती पत्रलेखा च । )

कामरतिः—भो भोः शिबिकावाहिनः ! सिंहासनस्य पादपीठे विमुञ्चत कुमारम् ।

( शिबिकावाहिनस्तथाकुर्वन्ति । )

पत्रलेखा—अज्जउत्त ! पिच्छ पिच्छ, वच्छस्स कीदिसं जादं ? ।[1]

( राजा विलोक्य सहसा मूर्च्छति । )

कामरतिः—भो भोः पुरुषाः ! त्वरध्वं त्वरध्वम्, उपनयध्वं उपनयध्वं चन्दनशिशिराम्भः कदलीपत्रव्यजनानि च ।

( प्रविश्य पुरुषाश्चन्दनाद्यैरभिषिच्य राजानं वीजयन्ति । )

राजा—( चेतनामासाद्य कुमारस्योपरि निपत्य च साक्रन्दम् )

वत्स ! प्रसीद, कुलमण्डन ! देहि वाचं,
हातुं कथं प्रवयसं पितरं क्षमस्ते ? ।
अस्तोकशोकजननीं प्रतिरुध्य निद्रा-
मुद्रां निजान् परिरभस्व चिराय बन्धून् ॥ १० ॥

( सर्वे तारस्वरं प्रलपन्ति । )

मित्राणन्दः—कालपाश ! किमपि विज्ञपयितुकामोऽस्मि ।

कालपाशः—अमात्य ! तस्करोऽयं राजानं विज्ञपयितुमिच्छति ।

कामरतिः—( साक्षेपम् ) इदानीं विज्ञापनायाः कः समयः ? ।

राजा—अमात्य ! किमभिधत्ते चौरः ? ।

कालपाशः—देव ! तस्करोऽयं राजानं विज्ञपयितुमिच्छति ।

राजा—व्यापाद्यमानो लभते विज्ञापनामेकाम्, तदयं विज्ञपयतु वराकः ।

मित्राणन्दः—अस्ति देव ! नः कुलक्रमागतो विषापहारमन्त्रः ।

कामरतिः—अरे ! म्रियमाणः कुशकाशानवलम्बसे ? ।

राजा—महाभाग ! भूयोऽप्येतान्येवाक्षराणि श्रावय ।

मित्राणन्दः—अस्ति नः कुलक्रमागतः शतशो दृष्टप्रत्ययो विषापहारमन्त्रः ।

---

१) आर्यपुत्र ! पश्य पश्य, वत्सस्य कीदृशं जातम् ? ।

**राजा**–(प्रणम्य) परमेश्वर! तर्हि प्रसीद। प्रयच्छास्मत्कुलाय प्राणभिक्षाम्। अरे कालपाश! द्रुततरमपनय बन्धनानि।

(कालपाशस्तथाकरोति।)

(मित्राणन्द आसनविशेषमाधाय ध्यानं नाटयति।)

(आकाशे)

**ब्रूहि भोः! ब्रूहि, किमर्थं मां स्मृतवानसि?।**

**सर्वे**–(ऊर्ध्वमवलोक्य सविस्मयम्) कथमियं भगवती विषदेवता जाङ्गुली स्वयं व्याहरति?।

**मित्राणन्दः**–(प्रणम्य) भगवति! यदि मया प्रसादिताऽसि तदा युवराजमुत्थापय।

(आकाशे)

**उत्तिष्ठ भोः! उत्तिष्ठ।**

**कुमारः**–(ससम्भ्रममुत्थाय) कथमयमियान् जनसम्मर्दः?। अम्ब! किमद्य तातदर्शनमहोत्सवे शोकदुर्दिनान्धकारितवदनाऽसि?। प्रयतस्व, व्रजामस्तातपादान् प्रणन्तुम्।

**राजा**–(सानन्दं सबाष्पम्)

**एह्येहि वत्स! शीतांशुवंशमुक्तावचूल! माम्।**
**दोर्भ्यां मृणालमित्राभ्यामालिङ्ग पितरं निजम्॥ ११॥**

**कुमारः**–कथं नेदीयांस एव तातपादाः?। (उत्थाय प्रणमति।)

(राजा आलिङ्गय शिरसि चुम्बति।)

**कुमारः**–(मित्राणन्दमवलोक्य) तात! वध्यनेपथ्यधारी राजसदसि कोऽयम्?।

**राजा**–महदस्य चरितमनाख्येयमिदानीं पवित्रे भवत्सम्पर्कपर्वणि।

(पुन सविनयं मित्राणन्दं प्रति)

**त्वमेवास्य स्वामी, त्वमसि जनकस्त्वं च जननी,**
**गुरुस्त्वं, बन्धुस्त्वं, त्वमसि परमं मित्रमपि च।**
**त्वया येनाऽऽकृष्टस्त्रिभुवनजनग्रासरभस-**
**प्रवेल्लज्जिह्वाग्रात् प्रसभमयमास्यात् पितृपतेः॥ १२॥**

(मित्राणन्द' सलज्जमधोमुखो भवति।)

**राजा**—(अमात्यं प्रति )

**प्राणानेष सुताय नः प्रवितरन् निःशेषमस्मत्कुलं,**
**प्राणैः प्रीणितमाचरत् प्रविलसत्कारुण्यपुण्याकृतिः ।**
**तत् किं वस्तु तदस्ति किञ्चन गुरौ ब्रह्माण्डभाण्डोदरे,**
**येनाऽऽनृण्यममुष्य विश्वजनतारत्नस्य यामो वयम् ? ॥ १३ ॥**

तत् तावदेतौ जम्पती स्ववेश्मनि नीत्वा प्रसादय अस्मन्निर्विशेषेण गौरवविशेषेण यावन्निजनगरं प्रति प्रस्थाप्येते ।

**कामरतिः**—( स्वगतम् ) प्रियं नः ।

**राजा**—वयं च कुमारेण सह सुख-दुःखवार्तां विधातुं मध्यं प्रविशामः ।

( इति निष्क्रान्ताः सर्वे । )

॥ पञ्चमोऽङ्कः समाप्तः ॥

---

## [॥ अथ षष्ठोऽङ्कः ॥]

( ततः प्रविशति मङ्गलकः । )

मङ्गलकः—( साश्चर्यम् )

समुद्रे पतितस्यापि क्षिप्तस्यापि नभस्तलात् ।
पुनः सम्पद्यते लक्ष्मीर्यदि प्राणैर्न मुच्यते ॥ १ ॥

कथमपरथा तथाविधे त्रिलोकीप्रतिभयैकसदसि महति सम्परायमहार्णवे विपक्षक्षितिपालकरालकरवालप्रहारैर्विजयवर्मणः प्रत्यङ्गं व्रणेन वैशसम् ?, कथं चाकाण्डसङ्घटितपान्थप्रवर्तितौषधद्रवोपलेपेन तदात्व एव व्रणश्रेणीसंरोहणम् ? सर्वथाऽप्यपारव्यसनकान्तारपतितेनापि प्रेक्षापूर्वकारिणा प्राणिना न विषादवैधुर्यमाधेयम् । भवतु, यथादिष्टमादधामि । ( पुरोऽवलोक्य ) कथमयमितः परापतति मदनकः ? ।

( प्रविश्य )

मदनकः—आर्य ! क्व प्रस्थितोऽसि ? ।

मङ्गलकः—अद्य किल रत्नाकराभ्यन्तरे विपक्षसौप्तिकोपनिपातकिंवदन्ती । ततः सैनिकावधानदानाय विजयवर्मणा मण्डलेश्वरेण प्रेषितोऽस्मि ।

मदनकः—आर्य ! आमूलतः सम्परायसंरम्भं श्रोतुमिच्छामि ।

मङ्गलकः—देवस्य विक्रमबाहोरादेशेन चक्रसेनमुत्पाटयितुं विजयवर्मा प्रस्थित इति तवापि प्रतीतमेव । अनन्तरं च—

क्षुण्णासु कोटिषु मदान्धदृशां भटानां,
नष्टे द्विपेन्द्रतुरगोद्धुरपत्तिसैन्ये ।
अन्योन्यमुद्यतकृपाणकडम्बकुन्तौ,
योद्धुं स्वयं परिवृढौ रभसात् प्रवृत्तौ ॥ २ ॥

मदनकः—( ससम्भ्रमम् ) ततस्ततः ? ।

मङ्गलकः—अनन्तरं च चक्रसेनः प्राणापहारिभिर्निशातहेतिभिर्विजयवर्माणं सर्वाङ्गीणमभिहतवान् ।

---

1 °प्रतिवर्तितौषधराजवलयेन ख ।

**मदनकः**–( सभयम् ) ततस्ततः ? ।

**मङ्गलकः**–ततः प्रहतसर्वाङ्गीणमर्माणं कण्ठगतप्राणं विजयवर्माणं विलोक्य विषादी निषादी शनैः शनैः गजराजं प्रतिनिवर्त्य स्वं शिबिरमायातवान् ।

**मदनकः**–अहह ! विक्रमग्राहोः प्रतापक्षयः । ( पुनर्विमृश्य ) आर्य ! कोऽयं द्विजातिर्मैत्रेयः ?, कथं च विजयवर्मणे सङ्घटितवान् ? ।

**मङ्गलकः**–अयं च किल वैदेशिकः सैनिकैर्भ्रमद्भिर्विपक्षप्रणिधिरिति मन्वानैः सङ्गृह्य विजयवर्मणे समुपनीतः । विजयवर्मणा च प्रहारप्रक्षतप्रभूतवेदनामूर्छालेन तदात्व एव व्यापादयितुमादिष्टः ।

**मदनकः**–ततस्ततः ? ।

**मङ्गलकः**–ततो 'मास मां व्यापादयः, तवाहं महान्तमुपकारमाधास्यामि' इत्यभिधाय मैत्रेयः केनाप्यौषधद्रवेणोपलिप्य विजयवर्माणं प्ररूढसर्वाङ्गीणव्रणमकरोत् ।

**मदनकः**–( सकौतुकम् )

**क नाम प्राणसंहारी सर्वाङ्गीणव्रणोदयः ? ।**
**क च मैत्रेयसम्पर्कः पर्ववल्लीप्ररोहभूः ? ॥ ३ ॥**

**मङ्गलकः**–किमेदः कौतूहलम् ? ।

**अभिमुखवर्तिनि वेधसि पुण्यगुणावर्जितानि सर्वाणि ।**
**द्वीपान्तरस्थितान्यपि पुरः प्रधावन्ति वस्तूनि ॥ ४ ॥**

तत् कथय क प्रस्थितोऽसि ? ।

**मदनकः**–देवेन भगवतो लोहितपाणेः पुरुषोपहारं कर्तुकामेन वैदेशिकस्य कस्यापि गवेषणाय प्रेषितोऽस्मि ।

**मङ्गलकः**–इदानीं किं करोति देवः ? ।

**मदनकः**–एष यक्षोपवने मैत्रेयेण सह किमपि जल्पन्नस्ति तत्र व्रज त्वम् । अहमपि यथादिष्टमादधामि ।

( इति निष्क्रान्तौ । )

॥ विष्कम्भकः ॥

( ततः प्रविशति यथानिर्दिष्टः समैत्रेयो विजयवर्मा सुनन्दप्रमृतिकश्च परिवारः । )

**विजयवर्मा**–कोऽत्र भो ! ? ।

( प्रविश्य )

**माधव्यः**–एषोऽस्मि ।

---

1 किमिदं कौ° क । 2 यक्षायतने ख । 3 ततो ख ।

विजयवर्मा—माधव्य ! नव्यां कामप्यद्य भगवतो यक्षाधिराजस्य पूजां विरचय। स्वयं च वयमद्य बलिं विधास्याम इत्युपहारपशुः पवित्रयित्वा प्रगुणीकार्यः ।

यदादिशति रत्नाकराधिपतिः । (इत्यभिधाय माधव्यो निष्क्रान्तः ।)

विजयवर्मा—(सविनयं मैत्रेयं प्रति)

प्राणेभ्यो नापरं वस्तु प्रेमपात्रं वपुष्मताम् ।
ते च मे युष्मदायत्ताः किं ब्रुवेऽहमतः परम् ? ॥ ५ ॥

मैत्रेयः—किमेवमादिशन्ति मण्डलेश्वरपादाः ?,

धात्रीधरैकधुरबाहुषु किं नृपेषु,
पुष्णाति भद्रमुदरम्भरिरध्वनीनः ? ।
युष्मादृशान् घटयितुं विधिरुन्मदिष्णुः,
श्रेयांसि तत्र पुनरौपयिकं स्थितोऽहम् ॥ ६ ॥

सुनन्दः—(साश्चर्यम्) देव ! सेयं महत्त्वस्य गाम्भीर्यस्य च परा काचिदुपनिषत्

विजयवर्मा—माहात्म्यदर्पसर्पमसंस्पृशन्तो यत्किञ्चिदपि समादिशत यूयम् । अहं पुनस्तत्रभवतो भवतो विना प्राणितमात्मनो विधेरप्यविधेयमाकलयामि ।

मैत्रेयः—रत्नाकराधीश्वर !

सम्पत्तिर्वा विपत्तिर्वा रोहन्ती दैवमीक्षते ।
एवमप्यर्थिताऽन्येषु पुंसां क्लैब्याय केवलम् ॥ ७ ॥

सुनन्दः—देव ! विरमतु कथेयम् । अनया खलु द्विजराजपादाः महतीं त्रपामुद्वहन्ति ।

विजयवर्मा—

निष्काङ्क्षमुपकारोऽपि विश्वोत्तीर्णा सतां क्रिया ।
अप्रकाशस्तु यस्तस्य तत्र ब्रह्माऽपि मन्थरः ॥ ८ ॥

सुनन्दः—देव !

पश्चषाः सन्ति ते केचिदुपकर्तुं स्फुरन्ति ये ।
ये स्मरन्त्युपकारस्य तैस्तु वन्ध्या वसुन्धरा ॥ ९ ॥

विजयवर्मा—किमेवमार्यानप्युपकार्योननार्यैः संक्लेशितः सन्तर्जयसि ? ।

प्रत्युपकारमाधातुमनुरूपं निरोजसः ।
उपकारं स्मरन्तोऽपि विस्मरन्ति महौजसः ॥ १० ॥

(पुनर्मैत्रेयं प्रति सविनयम्)

एते ते मदवारिशीकरभरस्यूताम्बराः सिन्धुरा-
स्तेऽप्येते प्रलयप्रभञ्जनजवप्रत्यर्थिनो वाजिनः ।
श्रीरेषा शरदिन्दुदर्पजयिनी सोऽहं कृतज्ञस्ततो,
येनार्थस्तममीषु यूयमचिराद् गृह्णीत किं शङ्कया ? ॥ ११ ॥

मैत्रेयः—द्विजातिरहमनर्हो गज-वाजिप्रभृतीनां सम्पत्तीनाम्, तदिदानीमिदमेवाभ्यर्थये ।

विजयवर्मा—(ससम्भ्रमम्) किं तत् ? ।

मैत्रेयः—परममित्रं मित्राणन्दनामानं वणिजं सिंहलाभ्यन्तरे क्वचिदपि गवेषयित्वा मम सङ्घटयत ।

विजयवर्मा—एतावतोऽप्यर्थस्य का नाम प्रार्थना ? । कोऽत्र भोः ! ? ।

(प्रविश्य)

पुरुषः—एषोऽस्मि ।

विजयवर्मा—अरे तरल ! समादिश मन्त्रिणं यथा मित्राणन्दनामानं वणिजं क्वचिदपि सिंहलाभ्यन्तरे गवेषयित्वा विज्ञपय ।

(पुरुषो निष्क्रान्तः ।)

विजयवर्मा—(विमृश्य) कोऽत्र भोः ! ? ।

(प्रविश्य)

कञ्चुकी—एसो म्हि ।

विजयवर्मा—कञ्चुकिन् ! वत्सां सुमित्रां कन्यकान्तःपुरादाकारय ।

(कञ्चुकी निष्क्रान्तः ।)

(प्रविश्य सुमित्रा सविनयं प्रणमति ।)

विजयवर्मा—आर्य मैत्रेय ! इयमस्माभिर्विजययात्रागतैः प्रतिपन्थिनगराद् बन्दीकृत्य समातृ-भ्रातृका वणिक्पुत्री समानीता । लज्जा-विनयादिभिश्च कुलपुत्रिकोचितैर्गुणैरावर्जितैर्दृष्टा च स्वपुत्रीनिर्विशेषेण गौरवविशेषेण । तदनुगृह्णीत माम् । असञ्जातपाणिग्रहणामेतां परिणयत यूयम् ।

मैत्रेयः—महामण्डलेश्वर ! द्विजातिरहमनया सह विजातिः, मित्राणन्दः पुनः सजातिः, यदि सङ्घटिष्यते तदा परिणेष्यते ।

विजयवर्मा—यदभिरुचितं भवतां तदस्तु । (पुनरञ्जलिं बद्ध्वा)

आक्रुष्टाः स्थ यदुच्चकैः कटुवचोवीचीभिरत्युद्भटं
बद्धा यत् प्रहताः स्थ यष्टिभिरदचारार्थिभिः पत्तिभिः ।
अस्माभिः प्रतिपक्षरोषपरुषैः क्षिप्ताः स्थ यत्पञ्जरं,
तद् यूयं सहत क्रुधो हि भिदुराः पाल्येषु पुण्यात्मनाम् ॥१२॥

---

१) एषोऽस्मि ।

1 विजययात्रां गते स्म । 2 °त्युद्भटं क ।

( मैत्रेयः सलज्जमधोमुखो भवति । )

**विजयवर्मा**—( विमृश्य ) सुनन्द ! कोऽयं यक्षाधिराजस्योपहारविधेर्विलम्बः[1] ? ।

( प्रविश्य )

**कपिञ्जलः**—देव ! सर्वमपि प्रगुणं पूजोपकरणम्, किमुतोपहारपुरुषः कथमपि न सङ्घटितः[2] ।

**विजयवर्मा**—( सविषादम् ) सुनन्द ! असम्पादितोपयाचितानामस्माकमुपस्पर्शनमात्रमप्यनुचितम् । तद् विचिन्तय कमप्युपहारसङ्घटनोपायम् ।

**मैत्रेयः**—

पुण्यप्रसूतजन्मानश्चण्डालव्यालसङ्गताम् ।
मांसरक्तमयीं देवाः किं बलिं स्पृहयालवः ? ॥ १३ ॥

ततः कोऽयं भवद्भिर्विचारवन्ध्यमनसां दुर्मेधसां पन्थाः समुपास्यते ? । अपि च—

अक्रूरं श्रेयसे कर्म क्रूरमश्रेयसे पुनः ।
इति सिद्धे पथि क्रूरं श्रेयसे स्पृशतां भ्रमः ॥ १४ ॥

**विजयवर्मा**—क्रूरशास्त्रप्रतारितैरस्माभिर्योऽयमेकः प्रतिज्ञातो विधिः स प्रमाणमस्तु । अतः परं पुनर्यदभिधास्यते तदनुष्ठास्यामः ।

( प्रविश्य )

**प्रतीहारः**—देव ! अमात्येन कामरतिना प्रेषितः पुरुषो द्वारि वर्तते ।

**विजयवर्मा**—( साशङ्कम् ) शीघ्रं प्रवेश्यताम् ।

( प्रविश्य पुरुषः प्रणम्य लेखमर्पयति । )

**सुनन्दः**—( गृहीत्वा वाचयति । ) स्वस्ति, रङ्गशालातो महामात्यः श्रीकामरति मण्डलेश्वरं विजयवर्माणं सम्बोध्य कार्यमादिशति । यथा—यदि मदीयं कमप्युपकारलेशं स्मरसि तदा यदयमपडक्षीणं किमपि विज्ञपयति सन्देशहरो दुर्मुखस्तदचिरादतिनिगूढमादधीथा इति ।

**विजयवर्मा**—दुर्मुख ! कथय किमपि कर्णे यदमात्यः समादिष्टवान् ।

( दुर्मुख उत्थाय कर्णे एवमेव । )

**विजयवर्मा**—कामरतिवचसा वयमात्मीयं शिरोऽपि समर्पयामः । एतावतः पुनरर्थस्य का कथा ? । किञ्च—

एकेनैवाधुनाऽस्माकमेतेन ननु कर्मणा ।
मन्त्री यक्षश्च सन्तोषपरिपोषं प्रयास्यति ॥ १५ ॥

---

1 विधिविलम्ब॰ क । 2 सङ्घटते ख ।

(पुनः कपिञ्जलं प्रति) यदयं दुर्मुखः [illegible] एवमेव।)

(सदुर्मुखः कपिञ्जलो निष्क्रान्तः।)

(नेपथ्ये)

भो भो उपवनचारिणः! सम्पन्ने निःशेषेऽप्युपहारोपस्करे किमद्यापि विलम्बते रत्नाकराधिनाथः?।

**विजयवर्मा**–(आकर्ण्य मैत्रेयं प्रति) यूयमागच्छत यक्षायतनम्। समीपीभूय कारयतोपहारकर्म।

(सर्वे यक्षायतनमुपसर्पन्ति।)

**विजयवर्मा**–(मैत्रेयं प्रति) सोऽयमस्माकं कुलदेवता लोहितपाणिर्यक्षाधिनाथः। (पुनः सखेदम्) कथं बहलधूपधूमश्यामलितलोचनैरस्माभिर्यक्षाधिनाथस्यापि मुखाम्भोजं न विलोक्यते?।

(प्रविश्य)

**कपिञ्जलः**–देव! सोऽयं नियन्त्रितभुजः कृतालेपनपवनः पुरो लोहितपाणेरुपहारपुरुषः।

(ततः प्रविशति यथानिर्दिष्टः पुरुषः।)

**विजयवर्मा**–(मैत्रेयं प्रति) भगवन्! कुरुतास्योपहारपुरुषस्य प्रोक्षणादिक्रियाम्। प्रयच्छत पारलौकिकं कमप्युपदेशम्।

(मैत्रेयः प्रोक्षणादिकं कृत्वा धूपपात्रं दत्ते।)

**विजयवर्मा**–कोऽत्र भोः! कृपाणधारेषु?।

(प्रविश्य पुरुषः कृपाणमर्पयति।)

**विजयवर्मा**–(कृपाणमाकृष्य) रे! स्मर किमपि [illegible] परमन्ते जीवितकथा।

**मैत्रेयः**–भो उपहारपुरुष!

देवादुपस्थिते मृत्यौ क्षीणसर्वप्रतिक्रिये।
तथा कथञ्चिन्मर्तव्यं न मर्तव्यं यथा पुनः॥

अहं च सर्वदर्शनानां क्रियासु कुशलो विशेषतः [illegible]॥
कुलम्?, किं ते कुलक्रमागतं दैवतम्?, येन तदुचितां [illegible] किं अपि च—

---
1–2 [illegible]

बन्धुभिर्विप्रयुक्तोऽहमिति चेतसि मा कृथाः।
बन्धूनां सम्प्रयोगेऽपि त्वमेव सहसे व्यथाः ॥ १७ ॥

पुरुषः—( मन्दस्वरम् ) आर्य ! गाढबन्धनपीडया शुष्कतालुमूलः स्तोकमपि वक्तुमहं न प्रभविष्णुः, ततः शिथिलय मे मनाग् बन्धनानि, पायय शिशिरस्य वारिणश्चुलुकमेकम् ।

विजयवर्मा—कोऽत्र भोः ! ? ।

( प्रविश्य )

पुरुषः—एषोऽस्मि ।

विजयवर्मा—अरे मदनक ! शिथिलय बन्धनानि, पायय शिशिरमम्भः ।

( मदनकस्तथाकरोति । )

पुरुषः—आर्य ! कौतुकमङ्गलनगरजन्मा वैदेशिकोऽहम् ।

मैत्रेयः—( स्वगतम् ) कौतुकमङ्गलनगरजन्मेत्यस्ति नः पक्षपातः । भवतु तावत् । ( प्रकाशम् ) कौतुकमङ्गलनगरे कस्ते पिता ?, किं ते मित्रम् ? ।

पुरुषः—( निःश्वस ) आर्य ! कृतमिदानीं नेतस्मिंस्त्रिलोकीत्रपाप्ररोहैकहेतौ पशुसमुचिते मरणपर्वणि कुलाचारपवित्राणां पितृ-मित्राणां प्रकाशनेन, न मे पितरौ, न मे मित्राणि, किमुताहमेकाकी गगनगर्भादिव पतितः ।

मैत्रेयः—( स्वगतम् ) महाकुलप्रसूतः खल्वयम्, महासत्त्वप्रकृतिश्च कोऽपि । ( पुनर्विमृश्य ) अपि नामायं कोऽपि जिनदासवर्गीणः सम्भवेत् ततो निर्बन्धेन पृच्छामि । ( प्रकाशम् ) महापुरुष ! यत एव ते पवित्राणि पितृ-मित्राणि तत एवाकाण्डोपस्थिते मरणविड्वरे समुद्घोपणीयानि ।

पुरुषः—आर्य ! जिनदासो मे पिता, मित्रं मकरन्दो मैत्रेयश्च ।

मैत्रेयः—हा भ्रातः मित्रवत्सल मित्राणन्द ! कामिमां दुस्थामवस्थामधिगतोऽसि ? ( इत्यभिदधानः पुरुषं परिरभ्य तारस्वरं प्रलपति । )

सर्वे—( ससम्भ्रमम् ) आर्यार्य मैत्रेय ! किमिदम् ? ।

मैत्रेयः—मण्डलाधिनाथ ! स एव मित्रं मे मित्राणन्दो यदर्थं यूयमभ्यर्थिताः ।

विजयवर्मा—( ससम्भ्रमं कृपाणेन स्वयं बन्धनानि त्रोटयति । पुनः सविनयम् ) महापुरुष ! क्षमस्व यदस्माभिरज्ञातसम्बन्धैरपराद्धम् ।

पुरुषः—ममैव कर्माण्यत्रापराध्यन्ति, न यूयम् ।

विजयवर्मा—

अपराधोऽत्र नास्माकं न च प्राचीनकर्मणाम् ।
किन्तु कामरतेस्तस्य पापतन्त्रस्य मन्त्रिणः ॥ १८ ॥

(पुनः सविनयम्) युष्मदर्थमियं विधृता मैत्रेयेण वत्सा सुमित्रा, तदेनामस्मिन् पवित्रे पर्वणि परिणयत यूयम् ।

**मित्राणन्दः**—अस्ति पुराऽपि मे कौमुदी नाम पत्नी, तदेतां मदीयो भ्राता मकरन्दः परिणेष्यते ।

(नेपथ्ये सकोलाहलम्)

सेनान्यः ! सप्तकृत्वः स्वगयत निखिलान् हास्तिकैर्गोपुराग्रान्,
अश्वीयानश्ववाराः ! प्रगुणयत बहिः सौप्तिकोपप्लवाय ।
पादातान्याधृणुध्वं वपुरतिविकटैः कङ्कटैर्युद्धकेलि-
श्रद्धावर्धिष्णुदर्पास्त्वरलयत भटाः ! संयुगं सांयुगीनाः ॥ १९ ॥

(प्रविश्य सम्भ्रान्तो)

**मङ्गलकः**—देव ! विपक्षावस्कन्दः प्राप्तः ।

**विजयवर्मा**—(ससम्भ्रमम्) व्रजत स्वं स्वं स्थानं यूयम् । वयमिदानीमभ्यमित्री-यतामाधास्यामः ।

(इति निष्क्रान्ताः सर्वे ।)

॥ षष्ठोऽङ्कः समाप्तः ॥

## [ ॥ अथ सप्तमोऽङ्कः ॥ ]

( तत प्रविशति सर्पकर्ण । )

**सर्पकर्णः**–( सखेदम् )

छित्त्वा कण्ठमकुण्ठखड्गलनया चाङ्गानि सन्तन्वतो,
लोकात् क्लेशशतार्जितं च सुलसङ्गाद्ध्यांन्धलैर्गृह्यते ।
प्राणानां च पणेन तस्य निभृतं भोगः सदा सर्वतः,
साशङ्कैः स्वपरोपतापजननीं धिक् तस्कराणां स्थितिम् ॥ १ ॥

( पुनर्विमृश्य ) आदिष्टोऽस्मि पल्लीपतिना सार्थस्य वा पान्थस्य वा कस्यापि गवेषणाय, तदहमेतं [1]न्यग्रोधमारुह्य विलोकयामि । ( तथाकृत्वा विलोक्य च ) कथमयं दवीयसि प्रदेशे महान् सार्थः समेति ? । ( पुनरन्यतोऽवलोक्य सहर्षम् ) कथमेतानि कियन्त्यपि स्त्रीप्रायाणि मानुषाणि पल्लेः परिसरवर्तीन्येव ? । तदुत्तीर्य निपुणमवलोकयामि । ( इत्युत्तरण नाटयति । )

( तत प्रविशति कौमुदी सुमित्रा स्कन्धकृतवालका वृद्धा मूर्धकृतकरण्डक स्थविरश्च । )

**कौमुदी**–[१]अणंतर कित्तिआइ पि दिवसाइं अम्हे अमचस्स गेहे वसिआइं ।

**सुमित्रा**–[२]तदो तदो ? ।

**कौमुदी**–[३]अन्नया निसीढसमये केणावि पओअणेण कत्थ वि अमच्चेण मित्ताणंदो पेसिदो ।

**वृद्धा**–( सत्वरम् ) [४]तदो तदो ? ।

**कौमुदी**–[५]मह उवरिं अणुरायं जाणिय अमचस्स भारिआए एदं थविर सहायं दाऊण करडयं च समप्पिअ पभाए अहं पि नीहारिदा ।

**स्थविरः**–वत्से ! सपत्नीसम्भावनया त्वममात्यपत्न्या निष्कासिताऽसि ।

**कौमुदी**–[६]कमेण च मग्गे भमंती [2]ईआणिं तुम्हाणं सत्थे मिलिदा ।

---

१ ) अनन्तरं कियन्त्यपि दिवसानि वय अमात्यस्य गेहे उषिता ।

२ ) ततस्तत ? ।

३ ) अन्यदा निशीथसमये केनापि प्रयोजनेन कुत्रापि अमात्येन मित्राणन्द प्रेषित ।

४ ) ततस्तत ? ।

५ ) ममोपरि अनुराग ज्ञात्वा अमात्यस्य भार्यया एत स्थविरं सहाय दत्त्वा करण्डक च समर्प्य प्रभाते ऽहमपि निष्कासिता ।

६ ) क्रमेण च मार्गे भ्राम्यती इदानीं युष्माकं सार्थे मीलिता ।

1 न्यग्रोधमधिरुह्य ख । 2 इयाणिं ख ।

**वृद्धा**–वत्से ! दिट्ठिया, चिट्ठदि दे पई मित्ताणंदो रयणायरउरे । एसा वि मह पुत्ती सुमित्ता तुह पइणो मित्तस्स मयरंदस्स रयणायराहिवइणा परिणेदुं पडिवादिदा वट्टदि ।[1]

**स्थविरः**–( सभयम् )

> **एषा व्याघ्रमुखी पल्लिरावासो वज्रवर्मणः ।**
> **चौरेभ्यो भयमेतस्यां राज्ञोऽपि किमु मादृशाम् ? ॥ २ ॥**

ततः सर्वाभिरपि सर्वतो दत्तदृष्टिभिः पिहितनेपथ्याभिर्वाचंयमाभिश्च त्वरिततरं गन्तव्यम् ।

( सर्वाः सभयं परिक्रामन्ति । )

**बालकः**–अम्ब ! बुभुक्खिदो म्हि ।[2]

( वृद्धा हस्तसंज्ञया बालकं वारयति । )

**बालकः**–( तारस्वरं प्रलपन् ) अम्ब ! अपूपं देहि मे ।

**स्थविरः**–( सरोषं यष्टिमुद्यम्य ) अरे ! तिष्ठ, मा रोदीः, अन्यथा कर्णावुत्पाटयिष्यामि ।

( बालकः सभयमास्ते । )

**सर्पकर्णः**–यथाऽयं भारभुग्नकन्धरः शनैःप्रचारी स्थविरस्तथा जाने सद्रविणोऽयं सार्थः । भवतु । स्थविरं पृच्छामि । ( उच्चैःस्वरम् ) आर्य ! क्व प्रस्थितोऽसि ? ।

**स्थविरः**–( स्वगतम् ) यथाऽयं तरलदृष्टिस्तथा जाने चौरप्रणिधिः । ( प्रकाशं साक्षेपम् ) किं तेऽस्मद्गमनचिन्तया ? । व्रज यत्र चलितोऽसि ।

**सर्पकर्णः**–नूनमयं मां ज्ञातवान् । भवतु । पल्लीपतये गत्वा विज्ञपयामि । ( इति विचिन्त्य शनैः शनैर्निष्क्रान्तः । )

**स्थविरः**–यदि मां तस्करा बध्नन्ति वा व्यापादयन्ति वा तदा बालकं गृहीत्वा सर्वाभिरपि पलायितव्यम् ।

( नेपथ्ये )

धलेध ले ! धलेध, मालेध ले ! मालेध, वेढेध ले ! वेढेध ।[3]

**स्थविरः**–हा ! हताः स्मः । कथं तस्कराः समापतन्ति ? ।

---

१) वत्से ! दिष्ट्या, तिष्ठति ते पतिर्मित्रानन्दो रत्नाकरपुरे । एषाऽपि मम पुत्री सुमित्रा तव पत्युर्मित्रस्य मकरन्दस्य रत्नाकराधिपतिना परिणेतुं प्रतिपादिता वर्तते ।

२) अम्ब ! बुभुक्षितोऽस्मि ।

३) धरत रे ! धरत, मारयत रे ! मारयत, वेष्टयत रे ! वेष्टयत ।

१ मैतरम्य स्त ।

अस्मिन् जगति महत्यपि न वेधसा किमपि वस्तु तद् घंटितम् ।
अनिमित्तमित्रवृत्तेर्भवति यतो मातुरुपकारः ॥ ६ ॥

( प्रकाश सकपटम् ) यमदण्ड ! यदि न मुञ्चति तदा व्यापादय बालकम् ।

( यमदण्ड कृतक कृपाणेन प्रणिहन्ति । )

( वृद्धा पूत्कुर्वाणा कृपाणघात शिरसा प्रतीच्छति । )

स्थविरः–( तारस्वरम् ) अब्रह्मण्यमब्रह्मण्यम् ।

सुमित्रा–( यमदण्ड प्रति ) भार्य ! कीस एदं थेरिं मारेसि ? ।

पल्लीपतिः–( सविस्मयम् )

अपत्यजीवितस्यार्थे प्राणानपि जहाति या ।
त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥ ७ ॥

( पुन सकरुण यमदण्डं प्रति ) मुञ्चैनं वराकम्, अन्यतः कुतोऽपि द्रविणमपहरिष्यामः ।

( प्रविश्य )

पुरुषः–भट्टा ! दिट्ठिया एगो महंतो सत्थो संपत्तो ।

पल्लीपतिः–( सहर्षम् ) अस्ति किमपि द्रविणम् ? ।

पुरुषः–कणयसपुडाइयं पहूदं दविणमत्थि ।

पल्लीपतिः–सार्थवाहोऽपि सङ्गृहीतः ? ।

पुरुषः–न केवलं संगिहीदो तुम्हाणं पासे आणीदो अत्थि ।

( तत प्रविशति पदातिना विधृतबाहु सार्थवाह । )

पल्लीपतिः–( विलोक्य ) यथाऽयं दर्शनीयाकृतिस्तथा जाने महापुरुषः कोऽपि ।

सुमित्रा–( अपवार्य कोमुदीं प्रति ) सहि ! सत्थवाहं निरूविअ मे महंतो हरिसपब्भारो वड्ढदि, ता चिंतेहि किं कारणं ? ।

कौमुदी–सहि ! ममावि एवं ।

पल्लीपतिः–सार्थवाह ! कुतः समागतोऽसि ? ।

सार्थवाहः–साम्प्रतं सुवर्णद्वीपात् ।

---

१ ) भ्रात ! कस्मादेतां स्थविरां मारयसि ? ।
२ ) भर्त ! दिष्ट्या एको महान् सार्थ सम्प्राप्त ।
३ ) कनकसम्पुटादिकं प्रभूतं द्रविणमस्ति ।
४ ) न केवल संगृहीतो युष्माक पार्श्वे आनीतोऽस्ति ।
५ ) सखि ! सार्थवाह निरूप्य मे महान् हर्षप्राग्भारो वर्धते, तच्चिन्तय किं कारणम् ? ।
६ ) सखि ! ममापि एवम् ।

1 °तच्चित्त° क । 2 भो ! कीस क ।

सुमित्रा—(निरूप्य स्वगतम्)

अरि! गरुअत्तं खंधाण अरिरि! वच्छत्थलस्स पिहुलत्तं।
कटरि! थिरत्तं दिट्ठीएँ कटरि! बाहाण दीहत्तं ॥ ८॥

पल्लीपतिः—स्त्वमेकः सार्थाधिपतिः?।

सार्थवाहः—अपरोऽप्यस्ति वेलन्धरपुरनिवासी नरदत्तनामा सार्थाधिपतिः।

पल्लीपतिः—अरे! कथं स न सङ्गृहीतः?।

पदातिः—सोऽपि सङ्गृहीतः, परं सार्थ एव तिष्ठति।

पल्लीपतिः—अरे पुरुष! गत्वा ब्रूहि कङ्कालकम्। यथा—सार्थद्रविणमशेषमपि पल्ल्यां प्रवेशय।

(पुरुषो निष्क्रान्तः।)

सार्थवाहः—(दक्षिणाक्षिस्फुरणमभिनीय सहर्षम्) निश्चितमयमस्माकं तस्करोपद्रवः शुभोदर्कः। (पुनः सुमित्रां साभिलाषमवलोक्य) अहो! बाह्यनेपथ्यैरकदर्थितो नेत्रपात्रैः क्लेशः कोऽपि चारिमा। यतः—

वक्त्रं चन्द्रविलासि, पङ्कजपरीहासक्षमे लोचने,
वर्णः स्वर्णमलङ्करिष्णुरलिनीजिष्णुः कचानां चयः।
वक्षोजाविभकुम्भविभ्रमहरौ, गुर्वी नितम्बस्थली,
वाचां मार्दवमुज्ज्वलं युवतिषु स्वाभाविकं मण्डनम् ॥ ९॥

पल्लीपतिः—सार्थवाह! किमभिधानोऽसि?।

सार्थवाहः—मकरन्दाभिधानोऽस्मि।

सुमित्रा—(सवितर्कमात्मगतम्) [2]किं एसो सो मयरंदो? जस्स अहं रयणायराहिवइणा परिणेदुं पडिवादिदा। (पुनः सस्पृहम्) जइ एसो चिअ सो ता कदत्थो मे जम्मो।

कौमुदी—(सविमर्शमात्मगतम्) [3]किं एसो सो मह भत्तुणो मित्तं मयरंदो?। दिट्ठिआ दिट्ठिआ, जीविद म्हि भत्तुणो मित्तस्स दंसणेण।

सार्थवाहः—(सुमित्रां निरूप्य स्वगतम्)

---

१) अरे! गुरुत्वं स्कन्धयोः अरेरे! वक्षस्थलस्य पृथुलत्वम्।
कटरि! स्थिरत्वं दृष्ट्याः कटरि! बाह्वोः दीर्घत्वम् ॥

२) किं एष स मकरन्द? यस्याहं रत्नाकराधिपतिना परिणेतुं प्रतिपादिता। यदि एष एव स तत् कृतार्थं मे जन्म।

३) किं एष स मम भर्तुर्मित्रं मकरन्दः?। दिष्ट्या दिष्ट्या, जीवितास्मि भर्तुर्मित्रस्य दर्शनेन।

अस्यां जगन्नयनकैरवचन्द्रिकायां,
सत्यामपि त्रिभुवनस्थितिसूत्रधारः ।
लक्ष्म्यां स यादसि रतिं हरिरादधानः,
प्रेम्णो विचारविमुखां दिशति प्रशस्तिम् ॥ १० ॥

पल्लीपतिः–अरे सर्पकर्ण ! गत्वा ब्रूहि कङ्कालकम् । यथा–नरदत्तः सुखं धरणीयः, अपरथा लक्ष्मीपतिर्युवराजः क्रोत्स्यति ।

( सर्पकर्णो निष्क्रान्तः । )

( प्रविश्य )

पुरुषः–भट्टा ! लच्छीवइणा पेसिदो पुरिसो तुम्हाणं दंसणमिच्छदि ।

पल्लीपतिः–( साशङ्कम् ) शीघ्रमानय ।

( पुरुषो निष्क्रान्तः । )

( प्रविश्य लेखहारकः लेखमर्पयति । )

पल्लीपतिः–( उत्थाय गृहीत्वा वाचयति ) स्वस्ति, वेलन्धरनगराद् युवराजो लक्ष्मीपतिर्व्याघ्रमुख्यां वज्रवर्माणं सम्बोध्य कार्यमादिशति । यथा–अस्माकं परमोपकारी मित्राणन्दनामा वणिक् कौमुदीनाम्न्या कान्तया समं परिभ्राम्यन् क्वचिदपि यदि भवत्पदातिभिः प्राप्यते तदाऽस्मभ्यमुपनेय इति । ( पुनर्विमृश्य स्वगतम् ) सम्भवति तयोर्मध्यात् किमप्येषु मानुषेषु । ( प्रकाशं सुमित्रा प्रति ) भद्रे ! किमभिधानाऽसि ? ।

सुमित्रा–अहं सुमित्ताभिहाणा ।

पल्लीपतिः–( कौमुदीं प्रति ) तव किमभिधानम् ? ।

स्थविरः–राजपुत्र ! अस्याः कौमुदीत्यभिधानम् ।

पल्लीपतिः–( स्वगतम् ) संवदति भार्यानामधेयम् । ( प्रकाशम् ) किमभिधानः पतिरस्याः ? ।

स्थविरः–एतद्भर्ता मित्राणन्दाभिधानः ।

पल्लीपतिः–( स्वगतम् ) कथमस्माभिरात्मीयानामेव मानुषाणामुपद्रवः कृतः ? ।

सार्थवाहः–भद्रे ! कुतस्त्यस्ते भर्ता ? ।

कौमुदी–कोउगमंगलनिवासी मे भत्ता ।

---

१ ) भर्तः ! लक्ष्मीपतिना प्रेषितः पुरुषः युष्माकं दर्शनमिच्छति ।

२ ) अहं सुमित्राभिधाना ।

३ ) कौतुकमङ्गलनिवासी मे भर्ता ।

1 कोउअ° क ।

सार्थवाहः–मैत्रेयो जीवति ?।

कौमुदी–(स्वगतम्) जहा एस सव्वं पि जाणेदि तहा णूणमेस मयरंदो। (प्रकाशम्) जीवदि।

सार्थवाहः–राजपुत्र! इयं मे भ्रातृजाया। स खलु मित्राणन्दो मे परमं मित्रम्।

कौमुदी–(पल्लीपतिं प्रति) एसा मे बहिणिआ सुमित्ता मित्ताणंदतोसिदेण रयणायराहिवयणा एदस्स अदिट्ठस्स वि परिणेदुं पडिवादिदा वट्टदि।

पल्लीपतिः–अयमस्माकं तर्हि जामाता। विवाहमङ्गलमप्यस्याः सदुहितुरस्माभिराधेयम्। (पुनर्लेखवाहकं प्रति) भद्र! व्रज त्वम्। विज्ञपय युवराजाय। यथा–प्राप्तानि कियन्त्यपि मानुषाणि, तानि प्रेषयिष्यामः। वयमपि विवाहमङ्गलमाधातुं पल्लीमधितिष्ठामः।

(इति निष्क्रान्ताः सर्वे।)

## ॥ सप्तमोऽङ्कः समाप्तः ॥

---

१) यथा एष सर्वमपि जानाति तथा नूनमेष मकरन्दः। जीवति।

२) एषा मे भगिनी सुमित्रा मित्राणन्दतोषितेन रत्नाकराधिपतिना एतस्याद्दृष्टस्यापि परिणेतुं प्रतिपादिता वर्तते।

# [ ॥ अथ अष्टमोऽङ्कः ॥ ]

( ततः प्रविशति मकरन्दः कौमुदी सुमित्रा च । )

मकरन्दः–( विमृश्य ) कोऽत्र भोः ! ? ।

( प्रविश्य )

पुरुषः–[1]एशे चिट्ठामि । आदिशेदु शत्तवाहे ।

मकरन्दः–अरे मागध ! इदानीं परिणतवया वर्तते दिवसः, ततो ब्रूहि गत्वा नरदत्तम् । यथा–यावद् वयमेकचक्राया नगर्याश्चैत्य-प्रासाद-प्राकारा-ऽऽरामरामणीयकं कौमुदी-सुमित्रयोरादर्शयामस्तावत् त्वया सार्थरक्षायां प्रयत्नो विधेयः, स्थविरश्च शम्बलं किमपि दत्त्वा रङ्गशालां प्रति प्रतिनिवर्त्तनीयः ।

( मागधो निष्क्रान्तः । )

मकरन्दः–( विमृश्य ) आर्ये कौमुदि ! कुलक्रमेणैवायं वज्रवर्मा शबरः, पवित्रेण चरित्रेण पुनः साधूनप्यतिशेते । इयन्तं हि द्रविणसमूहमुपनतं परित्यक्तुं साधवोऽपि तपस्विनः, किमुत परजीवितापहारिणः पक्कणचारिणः ? ।

द्रविणं मुञ्चमानश्च हस्तमोचनपर्वणि ।
औचित्तीं निष्पुणबुद्धित्वमात्मनः प्रथयत्ययम् ॥ १ ॥

( विमृश्य ) प्रिये सुमित्रे ! मातरं भ्रातरं च ते स्वनगरं प्रति प्रस्थापयन् वज्रवर्मा परं पुण्यमर्जितवान् ।

कौमुदी–[2]सहि सुमित्ते ! कत्थ ते पिउहरं ? ।

सुमित्रा–[3]अलयउरनिवासिणो धणदेवस्स सत्थवाहस्स अहं धूआ विजयवम्मणा बंदिग्गाहेण आणीदा ।

मकरन्दः–( पुरोऽवलोक्य साशङ्कम् )

चैत्यानि ध्वजचुम्बिताम्बरतलान्यश्वेभमुच्छृङ्खलं,
हर्म्याण्यद्भुतवैभवानि, विपणिः पण्यैरगण्यैर्घना ।
सञ्चारस्तु न चत्वरे न च गृहे स्त्रैणस्य पौंस्नस्य च,
शङ्का-त्रास-वितर्क-विस्मयकरः कोऽयं प्रकारः पुरः ? ॥ २ ॥

कौमुदी–( सभयविस्मयम् ) [4]अज्ज मयरंद ! ता किं नयरस्स मज्झं न पेक्खिदव्वं ? ।

---

१ ) एष तिष्ठामि । आदिशतु सार्थवाह ।

२ ) सखि सुमित्रे ! कुत्र ते पितृगृहम् ? ।

३ ) अचलपुरनिवासिनो धनदेवस्य सार्थवाहस्याहं पुत्री विजयवर्मणा बन्दि

४ ) आर्य मकरन्द ! तावत् किं नगरस्य मध्यं न प्रेक्षितव्यम् ? ।

1 एसो चिट्ठामि । आदिशेदु सत्थवाहे क ।

**मकरन्दः**—मध्यमपि विलोकयिष्यामः।

( सर्वे परिक्रामन्ति। )

**मकरन्दः**—( सभयम् )

**स्फुरद् वामं चक्षुः, प्रतिमुहुरिदं सैष भुजगः**
**स्फटाटोपी शुष्के विटपिनि विमुञ्चन् विषलवान्।**
**खरश्चायं भूम्नाऽभिमुखमतिरुष्टः कटु रटन्,**
**पुरस्तात् पश्चाद्वा विपदमतिगुर्वीं दिशति नः॥ ३॥**

**सुमित्रा**—अज्जउत्त! फलविसंवाईणं कित्तियाणं सउणाणं कन्नं देसि?[1]।

**मकरन्दः**—प्रिये!

**विसंवदतु वा मा वा शकुनं फलकर्मणि।**
**तथापि प्रथमं चेतो वैमनस्यमुपाश्नुते॥ ४॥**

आभ्यन्तरं च शकुनं चेत एव, तदेहि देवतायतनमेतदधिरुह्य देवतां नमस्कुर्मः। उपनता अपि हि विपदः प्रतिरुध्यन्ते देवतादर्शनेन।

( सर्वे देवतायतनमधिरोहन्ति। )

**मकरन्दः**—कथमयं सकलदेवताधिचक्रवर्ती नाभिसूनुश्चैत्याभ्यन्तरमलङ्करोति?।

( सर्वे प्रणमन्ति। )

**मकरन्दः**—( अञ्जलिमाधाय )

**भद्राम्भोजमृणालिनी, त्रिभुवनावद्यच्छिदाजाह्नवी,**
**लक्ष्मीयन्त्रणशृङ्खला, गुणकलावल्लीसुधासारणिः।**
**संसारार्णवनौर्विपत्तिलतिकानिस्त्रिंशयष्टिश्चिरं,**
**दृष्टिर्नाभिसुतस्य नः प्रथयतु श्रेयांसि तेजांसि च॥ ५॥**

( पुनर्विचिन्त्य ) आर्ये कौमुदि! देवतायतनजगत्यां स्थित्वा विलोकयामः कस्यापि मानुषस्य सञ्चारम्। ( विलोक्य ) कथमयमितस्ततो दत्तदृष्टिर्बटुः पर्यटन्नवलोक्यते?।

( प्रविश्य )

**बटुः**—स्वस्ति यजमानेभ्यः।

**मकरन्दः**—बटो! स्पष्टं प्रकटय त्रास-विस्मयकारिणः पुटभेदनस्यास्य स्वरूपमिदानीमेव देशान्तरादुपेयुषामस्माकम्।

**बटुः**—महाभाग! महानयं कथाप्रबन्धः। तमेवं योगीन्द्र एव युष्मभ्यमावेदयितुमलम्भूष्णुः। तदेत यूयम्। पश्यत देवतायतनोपवननिबद्धवासं योगीन्द्रम्[1]।

---

१ आर्यपुत्र! फलविसंवादिनां कियतां शकुनानां कर्णं ददासि?।

1 एतदादर्श क।

( सर्वे परिक्रामन्ति )

( ततः प्रविशति कापालिकः । )

**कापालिकः**—( साश्चर्यम् )

आद्यं यत् किल बीजमन्धतमसक्लिन्नस्य दुःखोदधे-
श्चेतः पर्वणि तत्र कुत्रचिदपि श्लाघ्ये समुत्कण्ठते ।
वेषस्त्वेष नरास्थिहार-रशना-ताडङ्क-चूडामणि-
प्रायः शंसति तापसीं स्थितिमहो ! रोमाञ्चिताः कौतुकैः ॥६॥

**वटुः**—( उपसृत्य ) भगवन् ! एष सार्थवाहः प्रणमति ।

**कापालिकः**—( कौमुदीं विलोक्य सहर्षमात्मगतम् )

यन्निमित्तं पुरा भ्राम्यन् क्लेशावेशमशिश्रियम् ।
तदेव स्वयमायातमहो ! वेधाः प्रियङ्करः ॥ ७ ॥

( पुनः सादरमिव प्रकाशम् ) कोऽत्र भोः ! १, पाद्यं पाद्यम्, अर्घोऽर्घः । ( पुनर्वटुं प्रति ) उपनयाऽऽसनानि ।

( वटुस्तथाकरोति । )

**कापालिकः**—सार्थवाह ! साम्प्रतं कुतः ? ।

**मकरन्दः**—साम्प्रतं व्याघ्रमुखीतः ।

( कापालिको वटो कर्णे एवमेव । )

( वटु निष्क्रान्त । )

**कापालिकः**—( पुन सस्पृहं कौमुदीमवलोक्य ) इयं का ? ।

**मकरन्दः**—इयं मे भ्रातृजाया ।

**कापालिकः**—पतिरस्याः सार्थमध्ये तिष्ठति ? ।

**मकरन्दः**—अस्याः पत्युरवस्थानं यूयमेव निरर्गलज्ञानजुषो ज्ञास्यथ ।

**कापालिकः**—इयमपरा का ? ।

**मकरन्दः**—इयं मे सधर्मचारिणी ।

**कापालिकः**—( कौमुदीमवलोक्य स्वगतम् )

चलकमलविलासाभ्यासिनी नेत्रपत्रे,
दशनवसनभूमिर्बन्धुजीवं दुनोति ।
स्मरभरपरिरोहत्पाण्डिमागूढरूढ-
द्युतिविजितमृगाङ्का मोदते गण्डभित्तिः ॥ ८ ॥

1 दु खार्वध क । 2 °मधितिष्ठति ख ।

( प्रकाशं मकरन्दं प्रति )

त्वां निध्याय निबद्धवासववपुःस्पर्द्धं, स्फुरद्यौवने
चैते प्रीति-रती इव प्रियतमे देवस्य चेतोभुवः।
स्मृत्वा तस्य कठोरघोरमनसः कृत्यं च पापीयस-
श्चेतो नः प्रतिकम्पते विघटते सन्त्रस्यति श्रद्यति ॥ ९ ॥

मकरन्दः—भगवन्! सर्वं वितथमावेदय।

( प्रविश्य सम्भ्रान्तः पुरुषो युवतिश्च। )

पुरुषः—( सदैन्यम् ) भगवन्! परित्रायस्व परित्रायस्व।

युवतिः—भयवं! रक्खेहि मं अणज्जविज्जाहरेण अवहरिज्जंतिं।

कापालिकः—मा भैष्टां मा भैष्टाम्, असदभ्यर्णमधिवसतोर्युवयोर्विरञ्चिरपि न प्रभविष्णुः, किमङ्ग! पुनः खेचरखेटः?।

पुरुषः—( सकरुणम् ) भगवन्! देहि मे प्राणभिक्षाम्।

मकरन्दः—( सभयम् ) भगवन्! कुतोऽयमनयोरियान् प्रतिभयाडम्बरः?।

कापालिकः—अस्ति नामैको योनिसिद्धः, स च "पक्ष्मलाक्षीलक्ष्मभिरमेत विद्याधरपदकामः" इत्यलीकां पापीयसीं वैदिकीं वाचमाकर्ण्य पृथिव्यास्तरुणं स्त्रैणमपहरति। परदारव्रतं चानुरुन्धानो भर्त्तारं व्यापाद्य सभर्तृकामभर्तृकां करोति। इदं च नगरं तेन दुरात्मना विगतमानुषप्रचारं कृतम्। तथापि वनितानिमित्तं व्यसनं सम्भावयामि।

मकरन्दः—भगवन्! स पुनः किमर्थमिदमनार्यं कर्म समाचरति?।

कापालिकः—महाभाग!

परस्य शर्मणः सत्यं प्रत्यूहो हरिणीदृशः।
भवेऽपि तद् यदि क्वापि तदा ता एव हेतवः॥ १० ॥

अपि च—

ताभ्यः सकर्णः को नाम कामिनीभ्यः पराङ्मुखः?।
भूर्भुवःस्वर्विभूतीनां सौभाग्यं यत्प्रसादतः॥ ११ ॥

पुरुषः—समादिशन्तु मे कृत्यं योगीन्द्रपादाः।

कापालिकः—सप्तमं दिनमिदं विद्याधराधमाकर्षणविधिमनुतिष्ठतामस्माकम्, तदियं ते पत्नी पुरोवर्तिनीनामेकचक्राकामिनीनां मध्ये यामद्वयमस्मत्पातालभवनमधिवसतु। एकाकिनः पुनः पुरुषस्य न समुचितः परदाराणां मध्येऽधिवासः, ततस्त्वं कियन्तमपि कालं क्वचिदपि गत्वाऽतिवाहय।

---

१ भगवन्! रक्ष मामनार्यविद्याधरेणापह्रियमाणाम्।

1 पापान्धसः ख। 2 प्रविकम्पते ख। 3 मध्ये निवासः क।

( पुरुषो निष्क्रान्त । )

**मकरन्दः**—( सभयमात्मगतम् ) ममापि कौमुदी-सुमित्रे पातालभवनमधिवासयितुमुचिते ।

**कापालिकः**—अद्य पुनर्निशीथसमये मन्त्रेण तन्त्रेण च तं दुरात्मानमाकृष्य मोचयिष्यामि निःशेषमप्यपहृतं यौवतम् । ( पुनर्विमृश्य ) कोऽत्र भोः ! ? ।

( प्रविश्य )

**तापसः**—एषोऽस्मि ।

**कापालिकः**—मायामय ! आनाय्य कियतीरपि युवतीर्येनेयं ताभिर्निर्दिष्टमार्गाभिः सह पातालवेश्मनि प्रविशति ।

( तापसो निष्क्रान्त । )

( तत प्रविशन्ति पातालभवनादागमन नाट्यन्त्य पञ्चषा योषित । )

( योषित कापालिक प्रणम्य कौमुदी-सुमित्रयो पादौ सस्पृशन्ति । )

**कापालिकः**—( युवतीं प्रति ) व्रज पाताल[1]भवनमेताभिः सह ।

**मकरन्दः**—भगवन् ! एते अपि कौमुदी-सुमित्रे यामद्वयं पातालगृहमधितिष्ठताम् ।

**कापालिकः**—( स्वगतम् ) प्रियं नः । ( प्रकाश ) यद् भवते रोचते तदस्तु ।

( सर्वा पातालभवनप्रवेश नाट्यन्ति । )

**कापालिकः**—( विमृश्य ) सार्थवाह ! इदानीं विद्याधराकर्षणहोमसमयः, ततस्त्वया क्रियमाणं साहायकं किमपि मृगयामहे ।

**मकरन्दः**—प्रकृत्यैवाहमकुतोभयः, ततः स्वैरमादिशत यूयम् ।

**कापालिकः**—त्वया समाकृष्टकरालकरवालेन निष्कम्पमनसा होमशयस्य पुरतः स्थातव्यम् । होममण्डले च नापरस्य मन्त्रस्य वा दैवतस्य वा कस्यापि प्रवेशः समुचित इति न त्वया प्रतिभयाकुलेन मनसि किमपि ध्यातव्यम् ।

**मकरन्दः**—एवं करिष्यामि ।

( प्रविश्य )

**मायामयः**—भगवन् ! सर्वं प्रगुणमेव पूजोपकरणम् । तदागच्छत होमवेदिकाम् ।

( सर्वे परिक्रामन्ति । )

**मायामयः**—

1 °लभुवमे° ख ।

एतानि होमविधये ज्वलितानलानि
कुण्डानि, सैष वनसैरिभपुच्छदीपः ।
एतद् वपुश्च पुरुषस्य सलक्षणस्य
निर्जीवमेव पुनरस्त्र-वसोपहारः ॥ १२ ॥

कापालिकः—पुरुषस्य वपुः क वर्तते ? ।

(प्रविश्य बद्धः पुरुषस्य वपुर्मण्डलमध्ये विमुच्य निष्क्रान्तः ।)

कापालिकः—(पुरुषवपुः कुण्डानां च पूजां विधाय मकरन्दं प्रति)

मन्त्रापविद्धं यद्येतद् वपुर्भ्राम्यति मण्डले ।
तथापि न त्वया स्थानात् कम्पनीयमितस्ततः ॥ १३ ॥

मकरन्दः—आवश्यकमेतत् ।

कापालिकः—मायामय ! उपनय पुरुषवपुः करवालम् ।

(मायामयस्तथाकरोति ।)

(कापालिकः वसारसोपलिप्तान्यन्नखण्डानि जुहोति ।)

मकरन्दः—(स्वगतम्) अपि नाम कोऽप्यपायः सम्भवेत्, तदहं परमेष्ठिनामपवित्रं मन्त्रं स्मरामि । (पुनः साशङ्कम्) कथं प्रहसति प्रचलति च पुरुषः ? ।

कापालिकः—(मकरन्दं प्रति) समय इदानीं शवोत्थानस्य, ततस्त्वया सावधानेन भवितव्यम् ।

(पुरुषस्य वपुः करवालमादाय मकरन्दाभिमुखं कतिचित्
पदानि दत्त्वा पुनर्मण्डलमध्ये निपतति ।)

कापालिकः—(ससम्भ्रमम्) किमपि दैवतं स्मरन्नसि ।

मकरन्दः—न किमपि स्मरामि ।

(कापालिकः सविशेषमन्नखण्डानि जुहोति ।)

(पुनः पुरुष उत्थाय तथैव निपतति ।)

कापालिकः—(साक्षेपम्) महाभाग ! किमिति कमपि दैवतं स्मृत्वा होमभङ्गं करोषि ? ।

मकरन्दः—सर्वथा नाहं किमपि स्मरामि ।

(कापालिकः पुनः साक्षेपं मन्त्रमुच्चारयन्नन्नखण्डानि जुहोति ।)

(पुनः पुरुषवपुर्मकरन्दाभिमुखं गत्वा प्रतिनिवृत्त्य च
करवालेन कापालिकमभिहन्ति ।)

(कापालिक आक्रन्दमाधाय तिरोधत्ते ।)

मकरन्दः—( विलोक्य ससम्भ्रमं ) कथं पतितं पुरुषवपुः ?, तिरोहितः क्वापि कापालिकः ? । ( पुनर्दिशोऽवलोक्य ) कथं मायामयादिकः परिवारोऽपि न दृश्यते ? । भवतु तावत्, पातालभवनतः कौमुदी-सुमित्रे समाह्वयामि । ( परिक्रम्य सविषादम् ) कथं न किमपि पातालभवनं दृश्यते ? । नूनममुना कापालिकेन वञ्चितोऽस्मि ।

( नेपथ्ये )

मकरन्द ! तूर्णमेहि व्रजति गृहीत्वा समग्रमपि सार्थम् ।
व्यापाद्य तव पदातीन् नरदत्तः स्वां पुरीमेषः ॥ १४ ॥

मकरन्दः—( आकर्ण्य ) कथं सार्थेऽप्युपद्रवस्तदहं गत्वा सम्भावयामि ।

( इति निष्क्रान्ताः सर्वे । )

॥ अष्टमोऽङ्कः समाप्तः ॥

---

1 समावाहयामि क । 2 समस्तमपि ख ।

## [॥ अथ नवमोऽङ्कः ॥]

( ततः प्रविशति युवराजो लक्ष्मीपतिरमात्यश्चारायणश्च । )

**युवराजः**–( ससम्भ्रमम् ) कोऽत्र भोः ! कञ्चुकिषु ? ।

( प्रविश्य )

**कञ्चुकी**–एषोऽस्मि ।

**युवराजः**–समादिश अगदङ्कारमात्रेयम् । यथा–देव्या अनङ्गसेनाया वपुषि सावधानेन भाव्यम् ।

( कञ्चुकी निष्कान्तः । )

( नेपथ्ये )

सरसिजवनमपबन्धं दिशो वितमसो दृशः प्रकटभावाः ।
अवतरति नभोमित्रे वसुधायां कस्य नाऽऽनन्दः ? ॥ १ ॥

**चारायणः**–देव ! शुभोदर्कं मित्रोदयं मागधः पठितवान् ।

**युवराजः**–अमात्य ! मित्राणन्दशब्दयोराकर्णनादुद्वेजिताः स्मः ।

पूर्जम्भारिपुरोपमानममरस्तम्बेरमस्पर्धिनो
नागाः, सूर्यतुरङ्गनिर्जयजवैर्विभ्राजिनो वाजिनः ।
राज्यश्रीककुदं तदेतदखिलं यन्मत्रलीलायितं,
तस्यांह्रिद्वितयीं शिरस्यवहतो धिग् नः कृतघ्नानिमान् ॥ २ ॥

( पुनर्विमृश्य ) अमात्य ! वचस्विनामवाच्यं श्रद्धालूनामश्रद्धेयं महीयसामश्रोतव्यमैहिका-ऽऽमुष्मिकापायप्रत्यवमर्शवन्ध्यमतिना कामरतिना पश्य कीदृशमनुष्ठितम् ? ।

**चारायणः**–देव ! किमनुष्ठितवानमात्यः कामरतिः ? ।

**युवराजः**–अस्माकं जीवितैकनिदानं मित्राणन्दाभिधानं तत्पत्नीमभिलाषुकः कामरतिः 'स्वनगरं प्रति प्रस्थापितो मित्राणन्दः' इति प्रवादं विधाय विजयवर्मणे व्यापादयितुमुपनीतवान् ।

**चारायणः**–देव !

जनुषान्धा न पश्यन्ति भावान् केवलमैहिकान् ।
ऐहिका-ऽऽमुष्मिकान् कामकामलान्धाः पुनर्जनाः ॥ ३ ॥

**युवराजः**–ततः परं च रत्नाकरभङ्गेन तस्य किमपि संवृत्तमिति न जानीमः, तत्पत्नी पुनः कौमुदी व्याघ्रमुख्यां तिष्ठतीत्यस्ति किंवदन्ती ।

( प्रविश्य )

प्रतीहारः—देव! देशान्तरतः समायातो नरदत्तः सार्थवाहो युवराजपादान् द्रष्टुमभिलषति।

चारायणः—देव! क्रमागतविभूतिर्महानर्यं नरदत्तः सार्थवाहः, तदमुं महता गौरवेण देवो द्रष्टुमर्हति।

युवराजः—(सादरम्) त्वरिततरं प्रवेशय।

(ततः प्रविशति उपायनीकृतरत्नभृतभाजनहस्तेन पुरुषेणानुगम्यमानो नरदत्तः।)

(नरदत्त उपायनभाजनमुपनीय प्रणमति।)

युवराजः—(ससम्भ्रमम्) क्षेमं यात्रिकाः! समायाताः स्थ?। निरुपद्रवः सर्वोऽपि सार्थलोकः?!

नरदत्तः—देवस्य विक्रमबाहोर्युवराजस्य च लक्ष्मीपतेः प्रभावेन।

चारायणः—देव! वेलन्धरमशेषमपि नरदत्तस्य यानपात्रयातायातैः समृद्धवैभवम्।

युवराजः—वेलन्धराभ्यर्णमदीपोऽपि सार्थः प्रविष्टः?।

चारायणः—देव! सार्थस्य कियानपि विष्कम्भोऽस्ति। (पुनर्नरदत्तं प्रति) विज्ञपय यथार्थं विष्कम्भस्वरूपं देवाय।

नरदत्तः—(सविनयम्) देव! सुवर्णद्वीपात् प्रतिनिवृत्तस्य ममैकः पट्टचरवृत्तिवणिक्पुत्रः सङ्घटितः। स च मया क्रयकौशलानुरञ्जितेन स्वसार्थे प्रधानः कृतः। स चेदानीं 'मदीपोऽयं सार्थः, न ते किमपि लभ्यमस्ति' इति व्याहरति।

युवराजः—अहो! अराजन्वती वसुमती। (पुनर्विमृश्य) अमात्य! नैकस्य संलापश्रवणेन निर्णयः कर्तुं शक्यते, अतो द्वितीयमपि पृच्छामि।

चारायणः—कोऽत्र भोः! अस्मत्परिजनेषु?।

( प्रविश्य )

देवशर्मा—एषोऽस्मि।

( चारायणः कर्णे एवमेव। )

( देवशर्मा निष्क्रान्तः। )

( ततः प्रविशति मकरन्दो देवशर्मा च। )

मकरन्दः—(सविषादमात्मगतम्)

विच्छेदः पितृ-बान्धवैः, प्रवहणस्योदन्वति भ्रंशनं,<br>
प्राणेभ्योऽप्यधिकं प्रियेण विरहो मित्रेण पुण्यात्मना।<br>
कान्ताया नवसङ्गमेऽप्यपहृतिः, सर्वस्वनाशोऽधुना,<br>
नव्यं नव्यमुदेति कन्दलमहो! प्रातीपिके वेधसि॥ ४॥

खलु कृत्वा नातीतव्यसनशोचनम्।
आजन्म यानि जायन्ते व्यसनानि सहस्रशः।
स्मर्यन्ते तानि चेन्नित्यं कोऽवकाशस्तदा मुदाम्?॥ ५॥

भवतु, प्रणमामि।

युवराजः—अये वाणिज्यकारक! किंनिदानोऽयं नरदत्तेन सह विवादः?।

मकरन्दः—(सविनयम्) देव! सुवर्णद्वीपात् प्रतिनिवृत्तस्य ममायं पटच्चर-वृत्तिर्नरदत्तः सङ्घटितः। क्रय-विक्रयकौशलानुरञ्जितेन च मया स्वसार्थे प्रधानः कृतः। अयं चेदानीं 'मदीयोऽयं सार्थः, न ते किमपि लभ्यमस्ति' इति व्याहरति।

(युवराजः स्मित्वा चारायणमुखमवलोकयति।)

चारायणः—देव! क्रमागतोऽयं नरदत्तः, तदस्य सत्येषु नः सम्प्रति प्रतिपत्ति-रस्ति, देशान्तरिणः पुनरस्य स्वरूपं नावगच्छामः।

युवराजः—अमात्य!

समूलकाषं कषतां द्विषन्महीं,
शिशून् पितृभ्यां हरतां च निर्दयम्।
अपक्षपातेन यदर्थनिर्णय-
स्तदेव धर्मः किमपि क्षमाभुजाम्॥ ६॥

चारायणः—ततः किम्?।

युवराजः—

समानशील-सन्तान-युक्ति-व्यापारयोर्द्वयोः।
विना विशेषचिह्नेन युक्तो नैकत्र निर्णयः॥ ७॥

मकरन्दः—देव! विशेषचिह्नमप्यस्ति।

युवराजः—कोऽवकाशस्तर्हि विवादस्य?।

मकरन्दः—देव! सुवर्णेष्टिकासम्पुटानि यानि तानि सर्वाण्यपि मन्नामाङ्कितानि।

युवराजः—देवशर्मन्! ससुवर्णसम्पुटं सुवर्णकारमाकारय।

(देवशर्मा निष्क्रान्तः।)

(प्रविश्य सुवर्णकारः सम्पुटान्युपनयति।)

युवराजः—(सर्वतोऽवलोक्य) कथं न कुत्राप्यभिधानम्?। (पुनः साक्षेपम्) अरे! कोऽयमसत्यालापः?।

मकरन्दः—द्वेधा विधाप्य सम्पुटानि मध्यमवलोकयतु देवः।

**युवराजः**—( तथाकृत्वा मध्यमवलोक्य च सविस्मयम् ) कथमुभयतोऽपि सम्पुटेषु मकरन्दाभिधानम् ?। ( पुनः साक्षेपममात्यं प्रति ) क्रमागतस्य नरदत्तस्यायमीदृशो युष्माकं सत्यप्रत्ययः ?।

**नरदत्तः**—( सविनयम् ) देव ! विज्ञपनीयमस्ति।

**युवराजः**—( साक्षेपम् ) अतः परमपि किमपि विज्ञपनीयमस्ति ?। भवतु, विज्ञपय।

**नरदत्तः**—देव ! बाल्ये हि मे पिता विपन्नः। इदानीमहमनुजश्चायं द्वावेव कुटुम्बे पुरुषौ।

**युवराजः**—ततः किम् ?।

**नरदत्तः**—अहमपि निरपत्यः, भ्रातैव मे अपत्यम्। तदस्यैव नाम्ना क्रेयं च वस्तु, अयं च मकरन्दाभिधानः। अत्र चार्थेऽमात्यः पौरलोकश्च प्रमाणम्।

**चारायणः**—देव ! अयमुपायनभाजनवाही भ्राताऽस्य मकरन्दाभिधानः।

**युवराजः**—कोऽत्र भोः !?।

( प्रविश्य )

**प्रतीहारः**—आदिशतु देवः।

**युवराजः**—कियतोऽपि वणिजः समाह्वय।

( प्रतीहारो निष्क्रान्तः )

( प्रविश्य कृतोष्णीषाः पञ्चषा वणिजः प्रणमन्ति। )

**युवराजः**—तातस्य विक्रमबाहोराज्ञा भवतां यदि पक्षपातेन वदत। ततः कथयत को नरदत्तस्य भ्राता ? किमभिधानश्च ?।

**वणिजः**—( सभयम् ) देव ! नरदत्तस्यायं भ्राता मकरन्दाभिधानः।

( युवराजः साटोपं मकरन्दमवलोकयति। )

**मकरन्दः**—( सदुःखमात्मगतम् )

**प्रत्यहं नव्यनव्याभिर्भवन्तीभिर्विपत्तिभिः।**
**आस्तां नाम परस्तावदात्माऽपि मम भग्नवान्॥ ८॥**

( प्रकाशम् ) देव ! अपरमप्यभिज्ञानमस्ति—इला मे गोत्रदेवता, तदभिधानेनापरमिलादत्त इत्यपि नाम। ततः कियन्त्यपि सम्पुटानीलादत्तनामाङ्कितानि, ततस्तान्यपि विलोकयतु देवः।

**युवराजः**—( तथाकृत्वा ) कथमेतानि इलादत्तनामाङ्कितानि ?। ( पुनः सरोषं नरदत्तं प्रति ) अतः परमपि विज्ञप्यमवशिष्यते किमपि ?।

**नरदत्तः**–( सावष्टम्भम् ) अवशिष्यते।

**युवराजः**–( विहस्य ) त्वरिततरं विज्ञपय।

**नरदत्तः**–देव! इलादत्ताभिधानो मे भागिनेयः, ततः सुवर्णद्वीपस्थितेन मया सोमपरिवेषपर्वणि सम्पुटानां शतमष्टोत्तरं तन्नामाङ्कितं कृतम्। अत्राप्यर्थे पौरलोकः प्रमाणम्।

( युवराजो वणिजां मुखान्यवलोकयति। )

**वणिजः**–अस्तीलादत्ताभिधानो नरदत्तभागिनेयः।

**युवराजः**–( साक्षेपं मकरन्दं प्रति ) अरे दाम्भिक! कूटप्रयोगैरस्माकं वणिजां च दुष्कीर्तिमुत्पादयसि?।

**मकरन्दः**–( सावष्टम्भम् ) उपायनीकृतरत्नानां प्रभावातिशयं नरदत्तमापृच्छतु देवः।

**युवराजः**–नरदत्त! कस्य रत्नस्य कः प्रभावातिशयः?।

**नरदत्तः**–( सक्षोभम् ) देव! सर्वाण्यपि रत्नानि सप्रभावाणि, परं न कदाचिदपि निरूपितप्रत्ययानि।

**युवराजः**–( नरदत्तं प्रति ) यदि त्वदीयानि रत्नानि तदा निस्सन्देहमभिदधीथाः।

**मकरन्दः**–देव! निःसन्देहमभिहिते भवन्ति मदीयानि रत्नानि?।

**युवराजः**–अवश्यं भवन्ति।

**मकरन्दः**–देव! रत्नमिदं स्पर्शमात्रेण शूलमपनयति। यदि चायमर्थो विसंवदति तदा शिरश्छेदेन दण्डः।

( प्रविश्य सम्भ्रान्तः )

**कञ्चुकी**–

देवी कण्ठगतप्राणा शूलवेदनयाऽधुना।
अतः परं विधेयं तु युवराजोऽवगच्छति॥ ९॥

**युवराजः**–कञ्चुकिन्! रत्नमिदमुपनय देव्याः, येन समूलं शूलं प्रणश्यति।

( कञ्चुकी रत्नमादाय निष्क्रान्तः। )

( नरदत्तः सभयमपवार्य उपायनभाजनवाहिनः कर्णे एवमेव। )

( उपायनभाजनवाही निष्क्रान्तः। )

( प्रविश्य )

**चेटी**–भट्टा! दिट्ठिया दिट्ठिया।

---

१) भर्तः! दिष्ट्या दिष्ट्या।

1 भागिनेयः ख।

युवराजः—( सभ्रमम् ) केरलिके ! त्वरिततरमानन्दस्य निदानं विज्ञपय ।

चेटी—[1]रयणस्स पभावेण भट्टिणी ववगयशूलवेअणा संजादा ।

युवराजः—( सक्रोधम् ) अमात्य ! कैतवप्रयोगैर्देशान्तरिणां धनमपहृत्यास्माकमकीर्तिमुत्पादयतो नरदत्तस्य को दण्डः ? ।

चारायणः—( सकम्पम् ) यं देवः समादिशति ।

युवराजः—तर्हि श्वपाकमाकार्य सकुटुम्बमेनं नरदत्तमस्माकं पश्यतां शूलमारोपय ।

( नरदत्तः कम्पते । )

चारायणः—( उच्चैस्वरम् ) भो अस्मत्परिजनाः ! सशूलं श्वपाकमाकारयत ।

( प्रविश्य )

प्रतीहारः—देव ! सर्वदेशाचार-भाषा-वेषकुशलो बर्बरकूलवासी वणिज्यकारको द्वारि वर्तते ।

( प्रविश्य )

श्वपाकः—[2]अमच्च ! एशे चिट्ठामि ।

चारायणः—अरे पिङ्गलक ! सकुटुम्बमेनं नरदत्तं शूलमारोपय ।

युवराजः—( प्रतीहारं प्रति ) प्रवेशय वणिज्यकारकम् ।

( प्रविश्य बर्बरो दूरस्थः प्रणमति । )

युवराजः—वणिज्यकारक ! केन प्रयोजनेन वेलन्धरमवतीर्णोऽसि ? ।

बर्बरः—[3]भट्टा ! पाणाहिंतो पि पियदले एगे मे भाया, शे लुशिय गिहादो नीशलिदे ।

युवराजः—ततः किम् ? ।

बर्बरः—[4]शे दाणिं वेलंधरे पविट्ठे चिट्ठदि ।

युवराजः—( मकरन्दमुद्दिश्य ) एतस्मात्तदयं वैदेशिको वेलन्धरे प्रविष्टोऽस्ति ।

बर्बरः—[5]हा भाय ! चिला दिट्ठो सि । ( इत्यभिदधानो मकरन्दं परिरभ्य तारस्वरं प्रलपति )

युवराजः—( ससम्भ्रमम् ) कथमयं मकरन्दो म्लेच्छजातिः ? । दुरात्मनाऽमुना म्लेच्छेन नरदत्तस्य वेश्मनि भोजन शयनाभ्यां वर्णसङ्करः कृतः ।

---

१ ) रत्नस्य प्रभावेन भट्टिनी व्यपगतशूलवेदना सञ्जाता ।

२ ) अमात्य ! एष तिष्ठामि ।

३ ) भर्त ! प्राणेभ्योऽपि प्रियतर एको मे भ्राता, स रुष्ट्वा गृहान्नि सृ. .

४ ) स इदानीं वेलन्धरे प्रविष्ट' तिष्ठति ।

५ ) हा भ्रात ! चिराद् दृष्टोऽसि ।

**मकरन्दः**–(स्वगतम्) शूलवेदनापहारेण मयि पक्षपात्यपि कुमारस्तेनाप्युनोपलिङ्गान्तरेण प्रतिपक्षतां यास्यति।

विरलविपदां कथञ्चिद् विपदो हर्तुं समीहते लोकः।
प्रतिपदनवविपदां पुनरुपैति माताऽपि निर्वेदम्॥ १०॥

तदतः परं कृतमुपायान्तरविमर्शनेन। यद् भाव्यं तद् भवतु।

**युवराजः**–(प्रतीहारं प्रति) उपनय दुरात्मानमेनं श्वपाकाय।

(प्रतीहारो मकरन्दं केशैराकृष्य श्वपाकायोपनयति।)

(नेपथ्ये)

अलमलं क्रूरेण कर्मणा।

**युवराजः**–(सक्रोधम्) अरे! कोऽयं कृतान्तवदनं स्पृहयालुरस्मदाज्ञां प्रतिरुणद्धि?।

**प्रतीहारः**–देव! व्याघ्रमुखीपतिर्वज्रवर्मा युष्मदाज्ञां प्रतिरुणद्धि।

**युवराजः**–(सदर्पम्) अस्मदाज्ञां प्रतिरोद्धुं शक्तिरस्ति पदातिपांशोर्वज्रवर्मणः?। (पुनः श्वपाकं प्रति) आरोपय शूलमेतं दुरात्मानम्।

(श्वपाको मकरन्दमुत्क्षिपति।)

(नेपथ्ये)

अहो! अब्रह्मण्यमब्रह्मण्यम्, अहह! पापकारित्वम्।

**युवराजः**–(साक्षेपम्) अरे! कोऽयमस्मान् भूयो भूयस्तिरस्करोति?।

(प्रविश्य वज्रवर्मणा सह)

**मित्राणन्दः**–कुमार! कोऽयं विचारव्यामोहः?।

**युवराजः**–(प्रत्यभिज्ञाय) कथमयमस्मत्प्राणस्वामी मित्राणन्दः?। (पुनः स्वसिंहासने समुपवेश्य) आर्य! किं तवाऽयं मकरन्दः?।

**मित्राणन्दः**–ममाऽयं भ्राता मकरन्दः।

**युवराजः**–अरे बर्बर! किमिदम्?।

**बर्बरः**–(सकम्पम्) नरदत्तेण एदं कवडं कालाविदे हगे।

**वज्रवर्मा**–ममायं मकरन्दो जामाता।

**युवराजः**–(सपश्चात्तापम्)

---

१) नरदत्तेन एतत् कपटं कारितोऽहम्।

अमर्ष-मात्सर्य-विमोह-कैतवै-
रसून् हरन्तो नयशालिनामपि ।
शुभेषु वृत्तिं दधतोऽपि केषुचित्
पतन्त्यगाधे तमसि क्षितीश्वराः ॥ ११ ॥

( पुनरमात्यं प्रति ) आरोपय सत्वरं नरदत्तं शूलम् । इह समानय कृतस्नानं मकरन्दम् । भवत्वस्माकं दुर्नयस्य प्रायश्चित्तम् ।

वज्रवर्मा—मित्राणन्दसम्पर्कपर्वणि न समुचितः प्राणिवधः ।

मित्राणन्दः—कुमार ! सर्वस्याप्यपराधस्यासदागमनमेव दण्डः ।

युवराजः—( सविनयम् )

एतद् दिनं सुदिनमेष विशेषकश्च
द्वीपः क्षितेः पुरमिदं च पुरां पताकम् ।
यस्मिन् पवित्रमनसो यशसो निशान्तं
युष्मादृशाः पथि भवन्ति दृशां शरण्याः ॥ १२ ॥

ततः कथयत केयमनभ्रा सुधावृष्टिः ? ।

वज्रवर्मा—सर्वमहं रजन्यां विज्ञपयिष्यामि । इदानीं पुनर्मध्याह्नसन्ध्यामाधातुं प्रयातु देवः । मित्राणन्दोऽप्यध्वश्रममपनयताम् ।

चारायणः—देव ! यदभिधत्ते वज्रवर्मा तदस्तु ।

( इति निष्क्रान्ताः सर्वे । )

॥ नवमोऽङ्कः समाप्तः ॥

---

## [ ॥ अथ दशमोऽङ्कः ॥ ]

( ततः प्रविशति पञ्चभैरवः ।)

**पञ्चभैरवः**—( उच्चैःस्वरम् ) हंहो विद्याधराः ! स्वयं रत्नकूटाधिपतिर्वः समादिशति—द्रुतमाकारयत दक्षिणाश्रमवासिनीं लम्बस्तनीम्, तौ च वध्यौ कुतोऽपि गवेषयित्वा समानयत, पुरुषोत्तमं च तं जीवितदायिनं सङ्घटयत ।

( नेपथ्ये )

यदादिशति सिद्धपरमेश्वरस्तदचिरादेव सम्पादयामि ।

**पञ्चभैरवः**—तर्हि गत्वा विज्ञपयामि सिद्धाधिपतये । ( इति परिक्रामति । विलोक्य ) कथमियमुत्तराश्रमवासिन्याः कुन्दलतायास्तापसी क्षेमङ्करी ? ।

( प्रविश्य )

**क्षेमङ्करी**—अज्ज[1] पंचभेरव ! सिद्धाहिवदिणो दंसणमहिलसामि ।

**पञ्चभैरवः**—भद्रे ! प्रहारवेदनाभिरतितरामस्वस्थशरीरः साम्प्रतं सिद्धपरमेश्वरो वक्तुमपि न प्रभविष्णुः, ततो दृष्ट्वा किं करिष्यसि ? ।

**क्षेमङ्करी**—पहार[2]वेअणोपसमणत्थं चेय दंसणमभिलसामि ।

**पञ्चभैरवः**—सत्वरमागच्छ, पश्य तर्हि कामकाननकदलीगृहमधिशयानं सिद्धाधिनाथम् ।

( ततः प्रविशति यथानिर्दिष्टः सिद्धाधिनाथः सुघण्ट-
नन्दिघोषप्रभृतिकश्च परिवारः ।)

**सिद्धाधिनाथः**—( प्रहारवेदनामभिनीय ) अहह ! ।

**सुघण्टः**—देव ! किं प्रहारव्रणमियन्तं कालमवतिष्ठते ? ।

**सिद्धाधिनाथः**—कुपितदेवताप्रहारोऽयं न संरोहिणीमौषधीं विना प्रशाम्यति ।

**नन्दिघोषः**—किमसाध्या संरोहिणी सिद्धपरमेश्वरस्य ? ।

( सिद्धाधिनाथः दीर्घं निःश्वस्य तूष्णीमास्ते ।)

**पञ्चभैरवः**—देव ! क्षेमङ्करी प्रणमति ।

**सिद्धाधिनाथः**—क्षेमङ्करि ! निष्प्रत्यूहव्रतानुष्ठाना कुशलवती कुन्दलता ? ।

---

१ ) आर्य पञ्चभैरव ! सिद्धाधिपतेर्दर्शनमभिलषामि ।

२ ) प्रहारवेदनोपशमनार्थमेव दर्शनमभिलषामि ।

क्षेमङ्करी–सिद्धाहिवदिणो पसादेण । (पुन सविनयम्) एदं विन्नवेदि कुन्दलता–अत्थि अम्हाणं आसमे मंतिओ अदिधी, सो मंतेण तंतेण य पहारवेयणं पडिहणेदि ।

सिद्धाधिनाथः–मन्त्रविस्तर विधापयितुं वयमिदानीमनोजस्विनः, तन्त्रप्रयोगं यदि करोति तदा कुरुताम् ।

( क्षेमङ्करी निष्क्रान्ता । )

सिद्धाधिनाथः–( सविषादम् ) अहो ! वैचित्र्यं कालस, प्रहारवेदनामुपशमयितुं वयमपि साम्प्रतमपरस्य मुखमीक्षामहे ।

( पुन स्मृत्वा )

अनुजग्राह नस्तत्र स्वक्लेशमुपगम्य यः ।
निसर्गसुहृदस्तस्य वणिजः किं विदध्महे ? ॥ १ ॥

( पुन सविषादम् )

परस्मादुपकारो यः सोऽपि व्रीडावहः सताम् ।
तस्याप्रत्युपकारस्तु दुनोत्यन्तः पशूनपि ॥ २ ॥

( नेपथ्ये )

परिमलभृतो वाताः, शाखा नवाङ्कुरकोटयो,
मधुरविरुतोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम् ।
विरलविरलस्वेदोद्गारा वधूवदनेन्दवः,
प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ? ॥ ३ ॥

सुघण्टः–देव ! शुभोदर्कं मागधः पठितवान् ।

सिद्धाधिनाथः–अद्य केनाप्यचिन्त्येन हेतुनाऽस्माकं मानममपि प्रवर्द्धमानोत्साहम् । ( पुनर्नन्दिघोष प्रति ) समादिश कामपरिचारकं ब्रह्मलयम् । यथा–वयमद्य निशीथे स्वयं बलिकर्म विधास्यामः । ततो भगवतः पञ्चबाणस्य पूजाविशेषः कोऽपि विपञ्चनीयः ।

( नन्दिघोषो निष्क्रान्त । )

( प्रविश्य )

क्षेमङ्करी–एंदिणा ततेण उवलिंपेदु पहारवणं सिद्धाहिवई ।

---

१ ) सिद्धाधिपते प्रसादेन । एतद् विज्ञपयति कुन्दलता–अस्ति अस्माकमाश्रमे मान्त्रिकोऽतिथि, स मन्त्रेण तन्त्रेण च प्रहारवेदनां प्रतिहन्ति ।

२ ) एतेन तन्त्रेणोपलिम्पतु प्रहारव्रण सिद्धाधिपति ।

1 एव क । 2 अहो ! विपाकवैचित्र्य क ।

सिद्धाधिनाथः–(तथाकृत्वा सविस्मयम्) कथं क्षणादेव सर्वथाऽप्यलक्ष्यः प्रहार-व्रणः समजनि ? । (पुनः सविमर्शम्) कथमिदं तदेवाऽऽस्माकीनमौषधम् ? । (क्षेमङ्करीं प्रति) सुमुखि ! स त्वदीयो मान्त्रिकः किमपरमपि किमपि जानाति ? ।

क्षेमङ्करी–[1]अवरं पि पियसंपओगं जाणादि ।

सिद्धाधिनाथः–कोऽप्यस्माकं व्यापादयितुं प्रियः, कोऽपि पूजयितुं, तदुभयस्यापि संयोगमाधातुमूर्जस्वलः ? ।

क्षेमङ्करी–[2]अध इं ? ।

सिद्धाधिनाथः–(सौत्सुक्यम्) समादिश कुन्दलताम् । यथा–निकषा कामायतनं स्वयं सन्निहिता विधापय मान्त्रिकेण प्रियजनसङ्गटनार्थं मन्त्रोपचारम् ।

(क्षेमङ्करी निष्क्रान्ता ।)

(प्रविश्य कटितटं नर्तयन्ती लम्बस्तनी प्रणमति ।)

सिद्धाधिनाथः–(ससंरम्भम्) लम्बस्तनि ! इदमासनमास्यताम् । (पुनः सौत्सुक्यम्) अस्मन्मनोरथानुरूपं किमप्याचरत्यात्रेयी ? ।

लम्बस्तनी–(सोद्वेगम्) [3]न किं पि ।

सिद्धाधिनाथः–हा हताः स्मः । (पुनः सविषादम्) लम्बस्तनि ! स एष ग्रैवेयकप्रयासप्रसादो यदस्माकमपि दौर्भाग्यम् । (पुनः सोपहासम्) सूत्रधारी खलु भवती विकटकपटनाटकघटनासु, ततस्त्वमपि मग्नाऽसि ।

लम्बस्तनी–[4]किमहं करेमि ?, सा खु अत्तेई न आहरदि, न जंपेदि, णवरं तवोविहाणकदनिच्छया रोअंती चिट्ठदि ।

सिद्धाधिनाथः–निजस्य पत्युः प्रेम्णा पत्यन्तरं नाभिलषति ?, उताहो ! मन्मथाभावेन ? ।

लम्बस्तनी–[5](साक्षेपम्) सा किमत्थि इत्थिआ ?, जीइ वम्महो न भोदि ।

सिद्धाधिनाथः–सन्ति ताः कियन्त्योऽप्यस्मिन् जगति स्त्रियो यासां मन्मथ-सहस्रमपि न मनो व्यथयति । स्त्रीसम्पर्क इव पुरुषसम्पर्कोऽपि न विकाराय । अङ्ग-संस्कारो लोकव्यवहारो न कामोद्गारः । जठरपिठरीभरणमात्रविषयः सर्वेऽप्यभिलाषाः

१) अपरमपि प्रियसम्प्रयोगं जानाति ।

२) अथ किम् ? ।

३) न किमपि ।

४) किमहं करोमि ? सा खलु आत्रेयी नाऽऽहरति, न जल्पति, नवरं तपोविधानकृतनिश्चया रुदती

५) सा किमस्ति स्त्री ?, यस्या मन्मथो न भवति ।

पुरुषोपसेवाऽऽजीविकार्थम् न मन्मथव्यथाव्यपोहार्थम् । कामयितरि जनयितरि भ्रातरि च पुरुषमात्रपरमन्तःकरणम् । तदलममुना वाग्विलासेन ।

*सर्वथा कैतवं निन्द्यं प्रवदन्ति विपश्चितः ।*
*केवलं न विना तेन दुःसाधं वस्तु सिध्यति ॥ ४ ॥*

ततो मन त्वं कामायतनम् । प्रवर्तय सर्ववनितासु विधीयमानं पर्वप्रश्रितमेव कैतवप्रयोगम् । वयमप्येते प्रदोषानन्तरमागता एव ।

(लम्बस्तनी निष्क्रान्ता ।)

(प्रविश्य)

**पुरुषः**–देव ! वध्ययोर्मध्यादेकः प्राप्तः ।

**सिद्धाधिनाथः**–(सरभसम्) घातकस्तदितरो वा ? ।

**पुरुषः**–तदितरः ।

**सिद्धाधिनाथः**–(पञ्चभैरवं प्रति) स एष मन्त्रोपचारकर्मणः प्रभावः । (पुनः पुरुषं प्रति) गत्वा समादिश लम्बस्तनीम्, यथा–पञ्चबाणस्यापि व्यापारो वध्यहस्तेनैव कार्यः ।

(पुरुषो निष्क्रान्तः ।)

(नेपथ्ये)

वसुधातलसन्तपनस्तपनश्चरमं प्रयात्यचलमेषः ।
प्रियजनसङ्घटनकर तिमिरं प्रविलुठति काष्ठासु ॥ ५ ॥

**पञ्चभैरवः**–देव ! माविक्रमन्त्रानुरूपं प्रदोषं मागधः पठितवान् ।

**सिद्धाधिनाथः**–अधितिष्ठामस्तर्हि कामायतनम् ।

(सर्वे परिक्रामन्ति ।)

**पञ्चभैरवः**–देव !

स्फूर्जद्यावकपङ्कसङ्कमलसन्मध्यं जपासोदरै-
र्दूष्यैः क्लृप्तपताकमाम्रकिसलैस्ताम्रीभवत्तोरणम् ।
कौसुम्भैर्घटितावचूलमभितो मत्तालिभिर्दामभिः,
सिन्दूरारुणिताङ्गणं गृहमिदं देवस्य चेतोभुवः ॥ ६ ॥

(प्रविश्य)

**ब्रह्मलयः**–देव ! स एष विहितविशेषपूजो भगवाननङ्गः । इदं च सिंहासन-मध्यास्यतां देवेन ।

**सिद्धाधिनाथः**–(प्रणम्य)

जनमहितमहिम्नां विष्णु-शम्भु-स्वयम्भू-
हरि-हय-हिमधाम्नां दुर्यशोनाट्यबीजम् ।
कृततरुणिममाद्यन्मानिनीमानभङ्गः,
प्रथयतु महतीं नस्तां समीहामनङ्गः ॥ ७ ॥

( पुनः सिंहासनमलङ्कृत्य सोत्कण्ठम् )

हिमकरकराकीर्णा रात्रिर्मधुः कलितोदयो,
गलितकुसुमैश्छन्ना भूमिः, सचापकरः स्मरः ।
मिथुनघटनादक्षं मित्रं, प्रिया प्रणयोन्मुखी,
विधिरयमियान् सम्पद्येत प्रसीदति वेधसि ॥ ८ ॥

( ततः प्रविशति लम्बस्तनी आत्रेयी च । )

सिद्धाधिनाथः—( आत्रेयीमवलोक्य सविस्मयम् )
चक्षुर्बाष्पविकज्जलं, करतलन्यासङ्गखण्डद्युति-
र्गण्डश्रीरधरः खरः प्रसृमरैः सूत्कारतारोर्मिभिः ।
आहारप्रतिरोधकीकस-शिरामात्रा च गात्रावनि-
र्दृष्टिं प्रीणयते तथापि सुदती लेखेव शीतत्विषः ॥ ९ ॥

लम्बस्तनी—वत्से ! पणमेहि सिद्धनाहं ।

( आत्रेयी प्रणम्य सलज्जमधोमुखी भवति ) ।

सिद्धाधिनाथः—
सौभाग्यद्रुममञ्जरि ! स्मरकरिक्रीडैकरेवावने !
लावण्यस्य तरङ्गिणि ! त्रिभुवनप्रह्लादनाचन्द्रिके ! ।
वक्त्राम्भोजमुदस्य पश्य सुदति ! स्वर्भूर्भुवश्चक्षुषां
साफल्यैकनिबन्धनं भगवतश्चेतोभुवो मन्दिरम् ॥ १० ॥

( आत्रेयी सव्रीडं तूष्णीमास्ते । )

सिद्धाधिनाथः—( सोत्कण्ठम् )
वक्त्रं विलक्ष्म, सततोदयदर्पिते च
नेत्रे, शठेन सृजता मदिरेक्षणायाः ।
धात्रा कलङ्क-विनिमीलनपांसुराणां,
किं नाम नापकृतमिन्दु-सरोरुहाणाम् ? ॥ ११ ॥

( पुनरपवार्य ) लम्बस्तनि ! सर्वमपि कामकर्तव्यं शिक्षितस्त्वया वध्यः ? ।

१) वत्से ! प्रणम सिद्धनाथम् ।

सिद्धाधिनाथः–ऐहिकमपि किमपि शरणं प्रतिपद्यस्व ।

पुरुषः–ऐहिकः पुनरनङ्गदासो योनिसिद्धः शरणम्, यो मया वरुणद्वीपे स्वयमुपकृतः ।

सिद्धाधिनाथः–कथं भवान् मित्राणन्दः ? ।

पुरुषः–मित्राणन्दोऽस्मि ।

सिद्धाधिनाथः–( प्रणम्य ) परमेश्वर ! प्रसीद प्रसीद, क्षमस्व कृतघ्नस्य क्रूरचेतसोऽनङ्गदासस्य तमेकमपराधम् । ( पञ्चभैरव प्रति ) स एष मे जीवितस्य स्वामी मित्राणन्दो यद्गवेषणाय यूयमभ्यर्थिताः ।

( पञ्चभैरव यावकोपलेपनमपनीय मित्राणन्द सिंहासने समुपवेशयति । )

( आत्रेयी प्रत्यभिज्ञाय परिरभ्य च तारस्वर प्रलपति । )

पुरुषः–( सवाष्पम् ) प्रिये ! कामिमां दुःस्थामवस्थामधिगतवत्यसि ? ।

सिद्धाधिनाथः–अपरमपि बहु कर्तव्यमस्ति । परमिदानीं गृहाण स्त्रीरत्नमेकम् । अमुमेव कुण्डाग्निं प्रदक्षिणीकृत्य परिणय भगवतः पञ्चबाणस्य पुरतः । ( लम्बस्तनीं प्रति ) उपनय द्वितीया तां तापसीम् ।

( प्रविश्य तापसी प्रणमति । )

आत्रेयी–( निभृतं विलोक्य[1] ) कथमेसा सुमित्ता ? ।

पुरुषः–कथमेषा सुमित्रा मकरन्दपत्नी ? । ( पुन सिद्ध प्रति ) इयं मे मित्रस्य पत्नी सुमित्रा ।

सिद्धाधिनाथः–( सलज्जम् ) केयमपराधपरम्परा ? । ( पुन पुरुष प्रति ) एते द्वे अपि मयैवापहृत्य विहितरूपान्तरे लम्बस्तनीवेश्मनि परस्परवार्तानभिज्ञे विहितनामान्तरे कालमियन्तं विधृते । ( पुनर्विमृश्य ) पतिरस्याः क्व वर्तते ? ।

पुरुषः–यदाऽहं वेलन्धरनगरात् स्वनगर प्रति प्रतिष्ठमानो युष्मद्विद्याधरैरपहृतस्तदा पतिरस्याः क्वचिदपि पलाय्य गतवान् ।

( प्रविश्य )

प्रतीहारः–एकः पथिको देवपादान् द्रष्टुमभिलषति ।

[ सिद्धाधिनाथः–शीघ्रं प्रवेशय ।

( प्रतीहारो निष्क्रान्त ) ]

( प्रविश्य पथिक प्रणमति । )

---

1 अवलोक्य क ।

१ ) कथमेषा सुमित्रा ? ।

**पुरुषः**—कथमेष मकरन्दः ? । ( इति सरभसमुत्थाय परिरभते । )

**सिद्धाधिनाथः**—( पुरुषं प्रति ) कोऽयं पथिकः ? ।

**पुरुषः**—अस्मन्मित्रं सुमित्रायाः पतिरयम् ।

( तापसी विलोक्य सरोमाञ्चमधोमुखी भवति । )

**सिद्धाधिनाथः**—( पथिकं प्रति ) किमर्थमत्रागमनं भवतः ? ।

**पथिकः**—विज्ञातवरुणद्वीपवृत्तान्तोऽहं मित्राणन्दव्यसनं विज्ञपयितुं युष्माकमुपस्थितोऽस्मि ।

**सिद्धाधिनाथः**—( सपश्चात्तापं पुरुषं प्रति ) युष्माभिरेवाहमुपकृत्य स्वयमात्मव्यसने पातितः ।

क्रूरः कृतोपकारः प्रत्यपकाराय कल्पते भूयः ।
विरचितपाशविनाशः प्रणिहन्ति विपाशकं सिंहः ॥ १६ ॥

**पुरुषः**—सिद्धाधिनाथ ! मास्म विषीदः । यदि व्यसनमिदं न भवेत् तदानीं कथमहं सन्निहितमित्र-कलत्रः स्याम् ।

अपकारं कुर्वाणैरुपकारः कोऽपि शक्यते कर्तुम् ? ।
सन्ताप्य फलसमृद्धाः करोति धान्यौषधीस्तपनः ॥ १७ ॥

( सिद्धाधिनाथः सलज्जमधोमुखो भवति । )

**पुरुषः**—सिद्धनाथ ! प्रियसम्पर्को वृथा मे मैत्रेयं विना ।

**सिद्धाधिनाथः**—( पञ्चभैरवं प्रति ) ब्रूहि मान्त्रिकम् । यथा प्रियः सर्वोऽपि सङ्घटितः परमेकोऽवशिष्यते तदर्थं प्रयतस्व ।

( नेपथ्ये )

प्रभातप्राया रजनिः । इदानीमनवसरो मन्त्रस्य ।

**सिद्धाधिनाथः**—( आकर्ण्य ) पञ्चभैरव ! तर्हि ब्रूहि कुन्दलतां यथा मान्त्रिकमस्माकं दर्शय ।

( पञ्चभैरवो निष्क्रान्तः । )

( ततः प्रविशति कुन्दलता मान्त्रिकश्च । )

**सर्वे**—( विलोक्य ) कथमयं मैत्रेयः ? । मोदामहे मनोरथानामप्यगम्येन प्रियजनसङ्घटनेन ।

**पुरुषः**—मैत्रेय ! कथमत्र सम्प्राप्तोऽसि ? ।

**मान्त्रिकः**—रत्नाकरात् त्वया सह वियोजितो भ्राम्यन् कुन्दलतामनुसृतवान् ।

सिद्धाधिनाथः—किं ते कुन्दलता दृष्टचरी ? ।

माणिक्कः—वरुणद्वीपे दृष्टचरी । (पुनरौषधिवलयं लि... द्रवेण यूयमुपशान्तमहारवेदनाः सञ्जाताः ।

सिद्धाधिनाथः—(पुरुषं प्रति) कुतस्ते कण्ठिकाया लाभः ? ।

पुरुषः—पाशपाणिनेयं मह्यमुपनीता । मया च जातमरणनिश्चये... पृष्ठस्थितेन युष्मत्कण्ठे विनिवेशिता ।

सिद्धाधिनाथः—कौमुदीमपहर्तुं आम्यन्नहं तदानीं पाशपाणिना ... भवान् घातहेतुश्चायं मकरन्दः कौमुदी-सुमित्रानुरागिणा मयाऽसिवासितुण्डे ... व्यापादयितुं गवेषितः । इयं च स्वयं त्वया पुरः कौमुदी समासादिता ।... पुनर्मयोपनीता ।

पुरुषः—यो मया प्रवहणभङ्गादारभ्य क्लेशोऽनुभूतस्तस्य सर्वस्य युष्मत्प्रसादे... पर्यन्तः समजनि । तदिदानीं समित्र-कलत्र-स्वापतेयं मामुपनयत कौतुकमङ्गलनगरम् ।

सिद्धाधिनाथः—इयतोऽप्यर्थस्य का नाम प्रार्थना ? । समादिश किमपरं ते प्रियमादधामि ? ।

पुरुषः—अतः परमपि किमपि प्रियमस्ति ? ।

सिद्धाधिनाथः—तथापीदमस्तु—

उपनतमित्र-कलत्रः सन्ततरामचन्द्रकरविशदाम् ।
आसाद्य यशोलक्ष्मीं परां स्वतन्त्रश्चिरं भूयाः ॥ १८ ॥

॥ इति दशमोऽङ्कः समाप्तः ॥

॥ कृतिरियं प्रबन्धशतकर्तुर्महाकवेः श्रीरामचन्द्रस्य ॥

कौमुदीमित्राणन्दं नाटकं
समाप्तम्

सिद्धाधिनाथः—किं ते कुन्दलता दृष्टचरी ? ।

मान्त्रिकः—वरुणद्वीपे दृष्टचरी। (पुनरौषधिवल्यं सिद्धनाथस्योपनीय) स्वैनैवौषधि-द्रवेण यूयमुपशान्तप्रहारवेदनाः सञ्जाताः ।

सिद्धाधिनाथः—(पुरुषं प्रति) कुतस्ते कण्ठिकाया लाभः ? ।

पुरुषः—पाशपाणिनेयं मह्यमुपनीता । मया च जातमरणनिश्चयेन स्मरप्रतिमा-पृष्ठस्थितेन युष्मत्कण्ठे विनिवेशिता ।

सिद्धाधिनाथः—कौमुदीमपहर्तुं भ्राम्यन्नहं तदानीं पाशपाणिना विडम्बितः। भवान् घातहेतुश्चायं मकरन्दः कौमुदी-सुमित्रानुरागिणा मयाऽस्मिन्नग्निकुण्डे कामदेवपुरतो व्यापादयितुं गवेषितः । इयं च स्वयं त्वया पुरः कौमुदी समासादिता । इदानीं पुनर्मयोपनीता ।

पुरुषः—यो मया प्रवहणभङ्गादारभ्य क्लेशोऽनुभूतस्तस्य सर्वस्य युष्मत्प्रसादेन पर्यन्तः समजनि । तदिदानीं समित्र-कलत्र-स्वापतेयं मामुपनयत कौतुकमङ्गलनगरम् ।

सिद्धाधिनाथः—इयतोऽप्यर्थस्य का नाम प्रार्थना ? । समादिश किमपरं ते प्रियमादधामि ? ।

पुरुषः—अतः परमपि किमपि प्रियमस्ति ? ।

सिद्धाधिनाथः—तथापीदमस्तु—

उपनतमित्र-कलत्रः सन्तसारामचन्द्रकरविशदाम् ।
आसाद्य यशोलक्ष्मीं परां स्वतन्त्रश्चिरं भूयाः ॥ १८ ॥

॥ इति दशमोऽङ्कः समाप्तः ॥

॥ कृतिरियं प्रबन्धशतकर्तुर्महाकवेः श्रीरामचन्द्रस्य ॥


कौमुदीमित्राणन्दं नाटकं
समाप्तम्